# ॥ अथ निदानसूत्रम् ॥

॥ अथ प्रथमः प्रपाठकः ॥

॥ ॐ ॥ अथातश्छन्दसां विचयं व्याख्यास्यामस्त्र-
यश्छन्दःपादा भवन्त्यष्टाक्षर एकादशाक्षरो द्वादशा-
क्षर इति नतु मिथं दशाक्षरो ऽष्टाक्षर आ पञ्चाक्षर-
ताया प्रति क्रामति विश्वेषां हित इत्या चतुर-
क्षरताया इत्येक आ दशाक्षरताया अभि क्रामति
अयं तदस्य सम्भृतं वस्वित्येकादशाक्षर आ नवाक्षर-
तायाः प्रति क्रामति यदि वा दधि यदि वा नेत्या
ऽष्टाक्षरताया इत्येक आ पञ्चदशाक्षरताया अभि
क्रामति सखा दधान मप्रतिष्कुतं श्रवांसि भूरीति
द्वादशाक्षरनवाक्षरतायाः प्रति क्रामति अनूपे
गोमान् गोभिरक्षारित्यष्टाक्षरताया इत्येके आ
षोडशाक्षरताया अभि क्रामति विकर्षेण त्वं वृत्राणि
हंसि च प्रतीत्येक इन्द्राविंत्या ऽष्टादशाक्षरताया
इत्येके ऽर्चामि सत्यसवं रत्नधा मभि प्रियं मतिं
कविं मित्रथा नो वृत्यप्रदेशो यत्र इन्द्र मक्षर सुपो-

त्तमं पादस्य ** सा जागती वृत्तिर्यत्र दीर्घं सा त्रैष्टुभी ऋस्वाक्षरश्चोपरिष्टाद् व्यञ्जनसन्निपाते ऽपि गौरव मष्टाक्षरद्वादशाक्षरौ लघुवृत्तौ दशाक्षरैकादशाक्षरौ गुरुवृत्तौ इत्येतैः खलु छन्दाꣳसि वर्त्तन्ते पथ्यान्येवार्थे सप्त चतुरुत्तराणि व्याख्यास्यामः ॥ १ ॥

चतुर्विंशत्यक्षरा गायत्री त्रिपादा ऽष्टाक्षरपादा ऽथापि चतुःपादा भवति षडक्षरपादा तद्यापि पञ्चाला उदाहरन्ति पेटी पालकं ते पेटा पिपिटकं ते तत्र ककुप् ****** परोष्णिगष्टाविꣳशत्यक्षरोष्णिक्त्रिपदैः पूर्वावष्टाक्षरावुत्तमो द्वादशाक्षरो ऽथ यत्र मध्ये द्वादशाक्षरः सा ककुब् यत्र प्रथमः सा पुरउष्णिगथापि चत्वारः सप्ताक्षरा इत्युदाहरन्ति नदं व ओदतीना मिति द्वात्रिꣳशदक्षरानुष्टुप् चतुःपादा ऽष्टाक्षरपादा ऽथापि त्रिपदा भवति मध्ये ऽष्टाक्षरो ऽभितो द्वादशाक्षरौ ताः पिपीलिकमध्येत्याचक्षते मध्येज्योतिरिति बह्वृचा एवं पादो यतो यतः परिक्रामेत् तज्ज्योतिष मेतां ब्रुवीत पुरतोज्योतिर्मध्येज्योतिि रुपरिष्टाज्ज्योतिरिति षट्त्रिꣳशदक्षरा बृहती चतुःपादैव त्रयो ऽष्टाक्षरा द्वादशश्च उपोत्तमो द्वादशाक्षरस्तां पथ्येत्याचक्षते ऽपि च स्कन्धोग्रीवे-

अथ यत्र प्रथमो द्वादशाक्षरः सा पुरस्ताद्बृहती यत्र द्वितीयः सोरोबृहती सैव न्यङ्कुसारिणी यत्रोत्तमः सोपरिष्टाद्बृहत्यथापि चत्वारो नवाक्षरा इत्युदाहरन्त्युपेद मुप पर्चन मित्यथापि त्रिपदा भवति द्वादशाक्षरपादाः प्रत्नं पीयूषं पूर्व्यं यदुक्थ्य मिति ताꣳ सतोबृहत्याचक्षते बार्हत मपि त्वचꣳ सतोबृहत्य इत्येवाचक्षते यथा वयं च त्वा सुतावन्त इति ॥ २ ॥

चत्वारिꣳशदक्षरा पङ्क्तिः पञ्चपदा ऽष्टाक्षरपादा अथापि चतुःपादा भवति द्वादशाक्षरो ऽष्टाक्षर इति व्यत्यासं ताꣳ सिद्धा विष्टारपङ्क्तिरित्याचक्षते पर्यासे विपरीता सैवाथ यत्र पूर्वावष्टाक्षरावुत्तरौ द्वादशाक्षरौ सा ऽऽस्तारपङ्क्तिरास्तीर्णाविवैतौ पङ्क्तिपादावित्यथ यत्र पूर्वौ द्वादशाक्षरावुत्तरावष्टाक्षरौ सा प्रस्तारपङ्क्तिः प्रस्तीर्णाविवैतौ पङ्क्तिपादावित्यथ यत्र मध्ये ऽष्टाक्षरौ भवतोऽभितो द्वादशाक्षरौ सꣳस्तारपङ्क्तिः सꣳस्तीर्णाविवैतौ पङ्क्तिपादावित्यथ यत्र मध्ये द्वादशाक्षरौ भवतोऽभितो ऽष्टाक्षरौ सा विष्टारपङ्क्तिर्विसृष्टपादाविवैतौ पङ्क्तिपादाविति तत्रच सिद्धा विष्टारपङ्क्तिर्बृहत्या वा ककुभो वोत्तरा भवति

तां प्रगाथा इत्याचक्षते अनुष्टुभा अपि प्रगाथा भवन्तीत्येके अनुष्टुप् प्रथमा गायत्र्यावुत्तरे यथा पुरो जिती वो अन्धस आ त्वा रथं यथोतये विशो विशो वो अतिथिं पान्त मा वो अन्धस इत्यथाक्षरपङ्क्ति र्या विंशत्यक्षराश्चतुःपदा पञ्चाक्षरा द्विपदा एना एके प्रतिजानते पञ्चविंशत्यक्षरा भवति पञ्चपदा पञ्चाक्षरपादा तां पदपङ्क्तिरित्याचक्षते ॥ ३ ॥

चतुश्चत्वारिंशदक्षरा त्रिष्टुप् चतुःपदैकादशाक्षरपादा अथ यत्रोत्तमो ऽष्टाक्षरस्तां ज्योतिष्मतीरित्याचक्षते पञ्चपदापि भवति चत्वारो ऽष्टाक्षरा एको द्वादशाक्षरो ऽष्टाचत्वारिंशदक्षरा जगती चतुःपदैव द्वादशाक्षरपादा ऽथ यत्रोत्तमो ऽष्टाक्षरस्तां ज्योतिष्मतीरित्येवाचक्षते पञ्चपदापि भवति त्रयोऽष्टाक्षरा द्वौ द्वादशाक्षरौ स एष समासश्चाष्टपदतायाः क्रमते सैषैवं सती त्रिष्टारपङ्क्तेः प्रवृद्धपदा षट्पदापि भवत्यष्टाक्षरपादा उभे यदिन्द्र रोदसी इत्येतानि खलु सप्त चतुरुत्तराणि छन्दांसि व्याख्यातानि प्रथमं प्रथमं त्वेवात्र न्यायं पथ्यं विद्यादेतासा मेव द्विपदा भवन्ति यत्र द्वावष्टा-

क्षरौ सा गायत्र्या यत्र द्वादशाक्षराष्टाक्षरौ सा विष्टारपङ्क्तिर्यत्रैकादशाक्षरौ सा त्रिष्टुभो यत्र द्वादशाक्षरौ सा जगत्या विषमपादा शम्पट प्र व इन्द्राय विश्वथेमा नु क मिति। नवाक्षरचतुर्दशाक्षरावेकादशाक्षरत्रयोदशाक्षरौ षडक्षरदशाक्षरावेकादशाक्षराष्टाक्षरौ दशाक्षरपादा विराज एकपदा प्रभृतयश्चतुःपदाश्च एकादशाक्षरपादा अपि त्रिपदा विराज इत्येवाचक्षते यथाग्निन्नर इति यथाग्निन्नर इति ॥ ४ ॥

ऊर्द्ध्वं जगत्या अतिच्छन्दसो द्विपञ्चाशदक्षरप्रभृतयश्चतुरुत्तरा द्वौ सप्तायवर्गौ चतुःशताक्षराणां परार्ध्या तासां नामधेयानि विधृतिः शक्वर्यष्टिरत्यष्टिर्मण्हनासरित्सम्पेति पूर्वस्य सिन्धुः सलिल मम्भो गहन मर्णव आपः समुद्र इत्युत्तरस्य तान्येतानि सर्वाणि कृतच्छन्दाꣳसि भवन्त्यथ प्राग्वि गायत्र्याः पञ्चकृतच्छन्दाꣳसि कृतिश्चतुरक्षरा पङ्क्तिरष्टाक्षरा संकृति र्द्वादशाक्षरा विकृतिः षोडशाक्षरा अभिकृतिर्विꣳशत्यक्षरैः तासा मन्तरप्यन्तस्था छन्दाꣳसि द्वाविꣳशताक्षरप्रभृतयश्चतुरुत्तरास्त्रयः सप्तवर्गा द्विशताक्षराणां परार्ध्या तासां नामधेयानि

राट् सम्राट् विराट् स्वराट् स्ववशिनी परमेष्ठा-न्तस्थेति पथ्यस्य मलं चामृतं च वृषा च जीवं च तप्तं च रसस्य शुक्र मित्युत्तरस्यार्षस्याथाप्यन्यास्तु वार्याप उदक मित्युत्तरस्य तान्येतानि सर्वाणि द्वापरच्छन्दांसि भवन्त्यथ प्राञ्चि द्वाविंशत्य-क्षराया: पञ्चानूक्ष्या छन्दांसि द्व्यक्षरप्रभृतीनि चतुरुत्तराणि श्यैनीका सपीका मर्षीका सर्वमात्रा विराट्कामेति ॥ ५ ॥

अथ निचृद्भुरिजो या एकेनाक्षरेणोनास्ता निचृतो ऽथ या एकेन ज्यायस्यस्ता भुरिजस्तान्येतानि सर्वाणि त्रेताकलिच्छन्दांसि भवन्ति तद्यत् त्रेतास्थानं ता निचृतोऽथ यत् कलिस्थानं ता भुरिजश्चतुष्टयेन छन्दो जिज्ञासेत पदैरक्षरैर्वृत्त्या स्थानेनेति तेषा मेकै-कस्मिन् वृत्तिशेषेणैव जिज्ञासनचतुष्टयं छन्दसो नोन-वृत्तेर्वर्ग मस्तीति विद्यादथ देवासुरच्छन्दांस्येकाक्षर-प्रभृतीन्येको नूराणि रौहीणि देवच्छन्दांसि सप्ता-क्षरा जगत्यष्टाक्षरातिच्छन्दा: पञ्चदशाक्षरप्रभृतीन्ये-कापाश्चि प्रत्यवरौहीण्यासुरच्छन्दांसि नवाक्षरा जगत्यष्टाक्षरैवातिच्छन्दा अथ प्रजापतेश्छन्दांस्यष्टा-क्षरप्रभृतीनि चतुरुत्तराणि रोहिणी द्वाचिंशदक्षरा

जगती षट्चिंशदक्षरातिच्छन्दास्तेषां त्रयं त्रयं समेत्यैकैक मृषिच्छन्दो भवति तदेष श्लोकः काश्चित् स्त्रो द्वाचर मेकविंशतिः सप्त भूरवानु भवति कामभिः पञ्चाशतः पञ्च नपुंसकानां द्वे चाधिके विभर्ति त्र्याचराणा मिति देवासुराणां छन्दोभि-रात्मनश्च प्रजापतिः सप्तवर्गञ्चकारैक मृषीणां यज्ञवोढवे यस्य कस्य च छन्दसः सम्पदं कश्चिदि-च्छति चतुर्थं तस्य सङ्ख्याय तावतीराहरेदृचो यह-तच्छन्द आहरेदन्यदस्य सम्पदे चतुर्थं तस्य सङ्ख्याय विद्यात् तावतीरृचः ॥ ६ ॥

"अथावसानान्येकपदा द्विपदाना मन्ततो ऽवसानं त्रिपदाप्रभृतीनां द्वावुक्त्वा शेष माह पट्पदाभ्यो भवति तत् त्रिपदाया मन्ततो ऽवसानं दृष्टीयन्निमत्र-धितय इति तथा चतुष्पदायां त्रिष्टुभो वयो वयः शय मिति तथा पञ्चपदाया यस्मे यम मित्यथापि द्वौ द्वा-वथैक मभि न इडा यूथस्य मातेत्यथापि द्वावुक्त्वा ऽथैक मथ द्वौ तव त्यं नर्यं नृतम मिति पट्पदायां द्वयोर्द्वयो-रवसान मुभे यदिन्द्र रोदसी इत्यथापि त्रिष्वपि वृश्चपुराणवदिति सप्तपदायां त्रीनुक्त्वा द्वौ द्वावग्निं होतारं मन्ये दास्वन्त मित्यथापि द्वौ द्वावथ त्रीन्

प्रोष्वस्मै पुरो रथ मित्यष्टपदाप्रभृतीनां न प्रज्ञात मवसानं विद्यते तत्र मध्य एव पदस्य नावस्येदर्थाभिप्रायणान् न्यूनीभावो अर्थाभिप्रायणा दतिरेको ऽथ यत्रैतदक्षर मागच्छति ता मिति वा तद्गतोनोकरीतेत्काचरीभाविनो वा सम्बयस्तदथैतौ श्लोकौ भवतश्चत्वारि सन्धिजातानि येष्छन्दो ह्रसते न च प्रश्लिष्ट मभिनिहितं चिप्र मथ प्रद्रुत मेतानि सन्धिजातानि मिमानश्छन्दो अक्षरैरेवं कुर्यात् सम्पूर्णेन पूर्णं किञ्चन नेक्षयेदिति छन्दसां विचयं जानन् यः शरीरादिमुच्यते छन्दसा मेति सालोक्य मानन्त्याय श्रुतेः श्रिय मिति ॥७॥

अथातः स्तोमान् व्याख्यास्यामस्तेष्वर्था भवन्ति युग्मतश्चायुजश्च तेषां विवेक एकप्रभृतयो द्व्युत्तरा अयुजो द्विकप्रभृतयो द्व्युत्तरा युग्मत उभये सन्तो द्वया भवन्ति समाश्च विषमाश्च यस्त्वेवं व्युह्यमानः समाः पर्याया भवन्ति स समो ऽतोऽन्ये विषमा विषमो द्वया भवन्त्येकाधिगयो द्व्यधिगयश्च य एकया समता मति क्रामति स एकाधिशयोयो द्वाभ्याए स द्व्यधिगयस्त्रिकप्रभृतयः षडुत्तरास्तेषां समाः पर्यायक्लृप्तयस्त्रयः पर्यायाः पर्यायास्त्रिविष्टुत्याः प्रथमे पर्याये प्रथमा तृच-

भागा ता मेव पर्यायभागेत्याचक्षते मध्यमावाप उत्तमा परिचरा मध्यमा तृचभागोत्तमावाप उत्तमे पर्याये प्रथमावापो मध्यमा परिचरोत्तमा तृचभागा सैषा विष्टावकृतिरेकविंशतिप्रभृतिषु साधिष्ठ मुपपद्यते एकिप्रभृतयः षडुत्तरा एकाधिशया स्तेषां पर्यायकृतिः समपर्यायैर्विषमा वर्त्तते पर्याया हि ते भवन्ति यावभितः समा वयुजौ तयोः पर्यायान्त्यसंहरेत्पूर्वस्यैक मुत्तरस्य द्वाविति युग्मतासु द्व्यधिशयानां युग्मायुक्पर्यायाणां सता मेष एव न्यायो ऽथ युक्पर्यायाणां पूर्वस्य द्वावुत्तरस्यैक मिति यथा युग्मतां द्व्यधिशयानां युक्पर्यायाणा मेव मयुजा मेकाधिशयानां युग्मायुक्पर्यायाणां पञ्चप्रभृतयः षडुत्तरा द्व्यधिशयास्तेषां पर्यायकृतिःसमपर्यायैर्विषमा वर्त्तते पर्याया हि ते भवन्ति यावभितः समावयुजौ तयोः पर्यायान्त्यसंहरेत्पूर्वस्य द्वावुत्तरस्यैक मिति युग्मतां चैकाधिशयानां युग्मायुक्पर्यायाणां सता मेष एव न्यायो ऽथ युक्पर्यायाणा पूर्वस्यैक मुत्तरस्य द्वाविति यथा युग्मता मेकाधिशयानां युक्पर्यायाणा मेव युजां द्व्यधिशयानां युग्मायुक्पर्यायाणा मित्ययुजः ॥ ८ ॥

अथ युग्मान्तो त्रिकप्रभृतयः षडुत्तरा द्व्यधिश्रयाश्चतुष्कप्रभृतयः षडुत्तरा एकाधिश्रयाः षट्कप्रभृतयः षडुत्तराः समास्तेषां पर्यायकृतिर्व्याख्याताथ यानां विवेक एकप्रभृतयश्चतुरुत्तराः कलिस्तोमास्त्रिकप्रभृतयश्चतुरुत्तरास्त्रेतास्तोमा द्विकप्रभृतयश्चतुरुत्तरा द्वापरस्तोमा श्चतुष्कप्रभृतयश्चतुरुत्तरा कृतस्तोमा अथ येषु समविषमाणां विवेक एकप्रभृतयो द्वादशोत्तरा एकाधिश्रयाः कलिस्तोमाः पञ्चप्रभृतयो द्वादशोत्तरा द्व्यधिश्रयाः कलिस्तोमास्त्रिवृक्प्रभृतयो द्वादशोत्तराः समाः कलिस्तोमास्त्रिकप्रभृतयो द्वादशोत्तराः समास्त्रितास्तोमाः सप्तप्रभृतयो द्वादशोत्तरा एकाधिश्रयास्त्रेतास्तोमा एकादशप्रभृतयो द्वादशोत्तरा द्व्यधिश्रयास्त्रेतास्तोमा द्विकप्रभृतयो द्वादशोत्तरा द्व्यधिश्रया द्वापरस्तोमाः षष्ठप्रभृतयो द्वादशोत्तराः समा द्वापरस्तोमा दशप्रभृतयो द्वादशोत्तरा एकाधिश्रया द्वापरस्तोमाश्चतुष्कप्रभृतयो द्वादशोत्तरा एकाधिश्रयाः कृतस्तोमा अष्टप्रभृतयो द्वादशोत्तरा द्व्यधिश्रयाः कृतस्तोमा द्वादशप्रभृतयो द्वादशोत्तराः समाः कृतस्तोमा अथोऽन्त एषां तज्जातीयविवेक एकप्रभृतयस्तूत्तरा उभये

मेकाधिशया त्रिकप्रभृतयोस्तूत्तरा उभयेषां द्व्यधिशयास्त्रिकप्रभृतयस्तूत्तरा उभयेषाꣳ समा व्यत्यासं वर्तते ॥ ६ ॥

अथ कतमे सप्तच्छन्दसाꣳ स्तोमा इति त्रिवृत्पञ्चदशः सप्तदश एकविꣳशः पञ्चविꣳशस्त्रिणवस्त्रयस्त्रिꣳश इत्यथ खल्वाह सानुष्टुप् चतुरुत्तराणि छन्दाꣳस्यसृजन्त षडुत्तरान्स्तोमान्त्सप्तदश इति सप्तदशात् त्रिक मृगृह्य पुरस्तात् त्रिवृतो निदध्या च्चतुर्दशानि त्रियन्ते ताः पञ्चविꣳश उपदध्यादेव मेतान् षडुत्तरान् ब्रुवते ऽथ कतमे भागस्तोमा इति त्रिवृत्पञ्चदशः सप्तदश एकविꣳशेति त्रिवृतः पथ्यायां विवदन्त उद्गाती पथ्या मन्य इति गौतमः सा हि पथ्या स्थाने तिष्ठतीति परिवर्त्तिनी मिति धानञ्जय्यः सा हि विष्टुती न्यायतरेण सता भवतीत्यथाप्यवर्षुकोस्तु पर्जन्यो भवतीत्युदित्यां निन्दा मवादीदित्यथ यत्र सꣳहृयमाणाः पर्याया यथास्थानं भवन्ति ता मविदुष्टपर्यायेत्याचक्षते यत्रायथास्थानं तां विदुष्टपर्यायेत्यथ यत्र समा स्वाद्यता पर्यायाणां भवन्ति ताꣳ समास मित्याचक्षते ऽथ यत्र प्रत्यवरोहिणस्तमभ्यान्याय इत्याचक्षते प्रत्यवरूढपर्यायेति

चाथ यत्र सꣳस्तुतस्य स्तोमस्य प्रथमा भूयिष्ठभाग् भवति तां ब्रह्मायतनीयेत्याचक्षतेऽथ यत्र मध्यमा तां क्षत्रायतनीयेति च गर्भिणीति चाथ यत्रोत्तमा तां विडायतनीयेति स खलु पर्यायान्त्सꣳहरन् भक्षान्यायं विडायतनीयाभिः प्रथमां पर्याय विदोप मिति वर्जयन्त्समान्त्समा मेव चिकीर्षेदिति ॥ १० ॥

अथातो विधिशेषान् व्याख्यास्यामो नोपवसथ्ये ऽहनि न समामनेरन्वागाथायिनी प्रयुञ्ज्येतेत्यथैताः कुशा उपकल्पयत औदुम्बरीर्वा पालाशीर्वा यो वान्यो यज्ञियो वृक्षः प्रादेशमात्रीः कुशपृष्ठास्त्वक्ताः समा मध्यतोऽङ्गुष्ठपर्वपृथुमात्रीः प्रज्ञातायाः कारयित्वा गन्धैः प्रलिप्य सर्पिषा सत्रेषु खादिरी दीर्घसत्रेषु वैण्टुतेन वसनेन परिविष्टौदुम्बरी मध्याधिवासयेत् क्षौमꣳ शाणं कार्पास मिति वसनविकल्पा औदुम्बरी मुद्धृत्य न विसृजेदाच्छदिषोऽभ्यूहनाच्छ्रोभूत एना मूर्द्धाग्रैः कुशैर्वेष्टयित्वैवंजातीयेनैवोद्द-दशेन वसनेन प्रदक्षिणं परिवेष्ट्य स्पृष्टो ऽनपहत उद्गायेदिति। गौतमो धिष्ण्यो ऽयं भवति न धिष्ण्य मासादयेदिति घृष्ट मपघ्नयेतेति धानञ्जय्यो पशुघणार्थेयं भवतीति सा य औदुम्बरी मङ्गलायैवाभुक्ता

उदकसेवी बहुपलाशो नातीवाफलो भवतीति प्राक्समासं वोदक्समासं वोपरिदृश मास्तीर्य प्रस्तोता विष्टुतीर्विदध्यादुदगग्राभिः प्रथमं विष्टावे प्राक्संस्थं प्रत्यक्संस्थ मित्येके पश्चात्प्रथमस्य विष्टावस्य प्रागग्राभिरुदक्संस्थं द्वितीयं प्रत्यगग्राभिरित्येके पश्चादेवास्य मध्यमस्य विष्टावस्योदगग्राभिः प्रत्यक्संस्थं तृतीय मेतयावृता पर्यायान्विदध्यादृचिषार्थं प्रथम मनुपूर्व मुदीचः संहृतान् विष्टावपर्यायान् विदध्यादितरेष्विसरेण शिरसि कुशानु विधीयेरन्नित्येके पराक्प्रादावर्त्याङ्गभावा तु विधीयेरन्नेतेन सम्भिरुक्तस्त्रिवृत उद्यत्या विधाने विप्रतिपद्यते यथैकः पर्याय इत्येके तृचभागा स्थानेषु पर्यायाणां पर्यायाः स्युरित्येक एतेनैवंजातीया व्याख्याता व्याख्याताः ॥११॥

अथातः सामान्तानां चत्वारो भागाः समास्ताः स्वरो निधन मिडा वाक्यानि स्वराण्याग्नेयानि तानि गायत्रतया वायव्यानि वा यानि निधनवन्त्यैन्द्राणि तानि त्रैष्टुभतया यान्यैडानि वैश्वदेवानि तानि जागततया यानि वाङ्निधनानि प्राजापत्यानि तान्यानुष्टुभतया ऽत खल्वस्य सर्वश्छन्दसो निधनार्थस्य एकं भवत्यथैमौ स्वरौ मन्त्रौ निध-

नेषु समाम्नायेते इकारोकारौ कस्य हेतोरिति यान्यन्यानि स्वराख्यसिद्धोपायानि तानि भवन्त्यत्र एव तेषां मध्यं न्ववस्वरणं भवत्यथैमौ सिद्धोपायौ भवतो वागुपायावित्यथापि निधनस्थानेषु युज्येते स्वरेण सनिए ततो निधनवाद्स्वैनयोर्भवति तं वैराजस्य निधने नाहएहन्नित्यथाप्येनौ वाक्यविलोपौ वाह्वरिहेति वेद मिति वा सदो विलुप्त ईकार ऊर्ध्व मिति वा विपरीतिना सदो विलुप्त ऊकारस्ताव-प्यनुनासिक्यौ ब्रुवते वाक्यविलोपरवादेव तद्यत्र यच्चैते सामान्ता भवन्ति स्वरो निधन मिडेति तदे-तान् प्रक्लृप्ता इत्याचक्षते ऽथ यत्र समानसामान्ते सन्निपततस्तञ्जामीत्याचक्षते समानपृष्ठे वौ ब्रह्नौ समानभक्तिनी च खलु नानात्वप्रक्रान्तिर्ध्वेयाजामि भवत्यथ यत्र समान मभ्यस्यते साम वाऽन्यवां जाम्येव तद्भवति सामान्यान्नसामान्नेनानहः संयुजामि भवति ॥ १२ ॥

अथैतान्यन्तरेण व्यवयन्त्यजामिकरणानि भवन्ति सोमो वषट्कारः शस्त्र मवयवो ऽथ यत्रान्तरेण सामानि गीयथातिश्छन्दसं परिमाद् इति तत्तत्राथ यत्रैक माध्यन्दिनंस्थानं नाना सामानि समवयन्ति यथा

व्रत एकसाम्न स्थान मिति तत्राथ यत्र समासान्ता व्यत्यस्यन्ते यथा विश्वजिति तत्राथ यत्र समानसामान्ते सन्निपततो मध्ये निधनेन तत्र यत्रो मध्ये निधनेनान्नेः पृथगिति तत्तत्र यत्रो न विद्यतेऽर्थः सन्निपतति त मर्थो ऽजामिकरण इति तत्तत्र सर्वत्र रथन्तरसन्निपाते जामि भवति तथा बृहत्सन्निपाते तचैतान्यजामिकरणानि सौभरं प्रतयत्यो बृहद्व्येषोऽभिव्याशरो वार्कजम्भं बृहन्निधनानीत्युक्तं रथन्तरसन्निपातेषु कण्वरथन्तर मभि भवति रथन्तरणिधनानीति बृहत्सन्निपातेष्वेतावता खलु जामि कृत्वा समन्वीचेत तदस्तिखित्याहुश्छन्दो देवता नास्तीति नास्तीति धानञ्जय्यः किं ह्यस्य छन्दो भविष्यति का देवता मितासुरो भवतीत्याभ्रतरगौतमौ यच्छन्दसाया मृदि गीयते तदस्य छन्दो यद्देवत्यायां साम्य देवता तद्विजानीमो यत्स्वयोन्यः स्वयोनिनापचिततरं भवत्यथाप्यैन्द्र्य ऋच ऐन्द्रं सामेति द्रजेति ॥ १३ ॥

॥ इति निदानसूत्रे प्रथमः प्रपाठकः ॥

——

॥ अथ द्वितीयः प्रपाठकः ॥

स्पिह्नत्सूहा३ अनूपिह्नत इति वै खल्वाहु-
रयद्याविरता एवोहनान्नो एव मार्येयो भवत्यथा-
प्यूह इत्येव माचक्षते कर्त्तव्य इतीवैतद्भवत्यथापि
याज्ञिका विप्रतिपद्यन्ते यज्ञार्थः खलु पुनरूहो भव-
त्यथापि वृत्तियोनिरिति गायन्ति किमु खलु स्मृतौ
वृत्यां किं योन्यां भविष्यतीत्यथापि नात्यन्तं गायन्ति
तत्र यद्गीतं कर्त्तव्य मित्येवापन्ना भवत्यथापन्नसं
हतय संहिता मवेक्षे गायन्ति तदेतत्स्मृतौ
नोपपद्येत इत्यूपिह्नत इत्यपरं कथ मेव बह्वनार्षं यज्ञो
क्रियेता ऽथापि वृहदुत्तरयोर्नाभिपश्यामीति भरद्वाज
स्तपो ऽतप्यत रथन्तर मुत्तरयोरिति वसिष्ठो विद्य-
मानखैवोहस्याभिवादो भवत्यनेनैव वासिष्ठभरद्वाज
मित्याचक्षते ऽथाप्याचार्यस्मृतीनां वक्ता न मतिशङ्क-
मानः सर्वत्रैवातिशङ्केवा ऽथापि योनिप्रतिषेधात्स्मृतं
मन्येतापि नूनं समर्थं मेवा।प यत्र मस्मृतं मन्येत
यत्रे ह्यपि विप्रतिपिद्धा भवन्तीति यद्देतद्यापि रता
*एवोहनादित्यगीतोहास्ते भवन्त्यप्रमाण* सु खल्वन-
धीयानो यद्देतदूह इत्येन माचक्षत इति भवन्त्ययथार्थं

नामधेयानि यदेतद्याज्ञिका विप्रतिपद्यन्त इत्याचार्य-कल्पे याज्ञिका विप्रतिपद्यन्ते स एव विस्मृतः स्याद् ब्राह्मणविप्रतिपत्त्या च यद्ब्रह्म स्मृतं मन्येत यदेतद्वृत्ति-र्योनिरिति गायत्रीति छन्दस्यार्चीर्णका वृत्तिर्योनी कल्पन्ते भवन्ति वापेत्य वृत्तियोनिभ्या माचार्य-गीतानि यथा पार्थ-शौश्र-भार्गाणि यदेतन्नात्यन्तं गायन्तीति कल्पा अपायनत्यन्ता भवन्ति अथावाप-मानेकाहः श्रौतोमा उत्तरा तरतिरसुब्राह्मणिना मिति यदेतदन्यसंहितश्च संहिता मवेत्य गाय-न्तीति छन्दस्यपि वृत्तिश्चोऽन्यसंहितश्च संहिता मवेत्य गायेन्न तावता छन्दो ऽस्मृतं मन्येताथापि य उपवादादस्मृतं मन्येतापि नूनं समर्था मेवापिचं चयोविद्या मस्मृतां मन्येत तां ह्यप्येक उपवद-न्तीति ॥ १ ॥

एकर्चदृष्टीनि भवित् सामानीह त्वचदृष्टीनीत्ये-कर्चदृष्टीनीति शाण्डिल्यायनस्तद्विजानीमश्छान्दसे-नाध्यायेनैकर्चान् भूयिष्ठांश्छन्दांस्यधीमहे ऽथापि सो यज्ञ उपदृष्टिः प्राह यदत्र भूयिष्ठमेकर्चान्कर्तुं मया-प्येकर्चैः स्तोमानसम्मिमत एकर्चान् ह वय मधीमहे नाध्वर्युवत्सधा उत्तरे अभिजानतीति त्वच मदृष्टीनीति

धानन्नष्य न्तद्विजानीमच्छान्दसैनैवाध्यायेनैकर्चानधीत्य तृच मुत्तम मधीमहे निदर्शनार्थो वै स भवत्येव मेवातः प्रागित्यथापि नायन्न एवोपदृष्टिः प्राप्तो काम एवाचैकर्चान् करोत्यथापि न स्तचः पूर्वा स्तोत्रियाणि प्राहुर्द्वितीयायां चाथ तृतीयायां चर्चिं लक्षणं भवति यद्यार्षेयं तत्साम भवतीति यथाकूपार मैपिरम्पौरुहन्मन मित्यथापि छिन्न मिव वा एतद्यदेकर्चा इति ब्राह्मणवादः परिचष्टे ऽथापि जनुषैकर्चौ नाम्नाधीमहे . तचदृष्टित्वादेवायाम्यधुनैव दैववादे यस्तृचापन्नं छन्दोऽनुजगातु रवचदृष्टीनीति शाण्डिल्योऽप्यन्त्यपिर्यथादैवतान्यपेक्षाणि यथासामोपेतान्यपेक्षाणां यथाभूयिष्ठान्यपि द्वयोर्यथातीपक्षा अपि तिसृषु यथा सन्तनीत्यपि चतसृषु यथैलान्द मपि भूयसीषु यथा पुरुषव्रतं कश्यपव्रत मादित्यव्रत मित्यपि त्वैतान्येके सामसूक्तानीत्याचक्षत इत्याचक्षत इति ॥ २ ॥

अथ द्वयानि सामानीति प्रदिशन्ति यान्यपुरस्तात्स्तोभानि पदनिधनानि लघुगीतीनि तानि गायन्तराणि यानि पुरस्तात्स्तोभानि वहिर्णिधनानि गुरुगीतीनि (उपान्तपक्षस्यां पङ्क्तिपक्षकं गजन्तं तानि

रथन्तराणि यानि गुरुगीतीनि बार्हतानीति *)
(तानि बार्हतानि यथान्यतरतो रथन्तराणि चान्यतरतो बार्हतानि चापुरस्तात्स्तोभानि च वहिर्निधनानि च पुरस्तात्स्तोभानि च पदनिधनान्यथोभयतो बार्हतानि च पुरस्तात्स्तोभानि च पदनिधनानि गुरुगीतीनि पुरस्तात्स्तोभानि वहिर्निधनानि लघुगीतीन्येतानि विजिज्ञासेतेति शाण्डिल्यायनो यानि लघुगीतीनि रथन्तराणि यानि गुरुगीतीनि बार्हतान्यपि यान्युदात्तगीतीनि तानि रथन्तराणि यान्यनुदात्तगीतीनि तानि बार्हतानीति+)
कल्पेनैव यज्ञकामा व्याख्याता यथैतत् स्वर्गकामो यज्ञः पशुकामो यज्ञः प्रजापतिकामो यज्ञोऽभिचरणीय इत्यप्याहुरर्द्धार्थं एव खल्वयं भवति खल्वर्थं येष्णोऽन्येषां मन्त्रयन्तीत्याप्तकामास्त्विहैवा शूयन्ताइ अनाप्तकामा इत्यनाप्तकामा इति वै खल्वाहुः को ह्याप्तकामस्य सुत्या कः प्रत्यर्थी भविष्यतीत्यथाप्याहुः शश्वदज्ञाप्तकामा एव भवन्ति तत्सत्यवादेन जानीमो यस्मै देवाः कामयन्ते तस्मै समर्द्धयन्ति कुतोऽनाप्तकामाः समर्द्धयिष्यन्तीत्यथापीहैव पश्याम चाप्तका-

---

* एतावानंशः ख पुस्तके नास्ति ।  + एतावानंशः ख पुस्तके नास्ति ।

मतराणा मनाप्तकामैरीसां यथैतद्राज्ञा मित्य-
यापराल्यक मवदायाद्द विश्वेभ्यो देवेभ्यः स्वाहेति
कुतो ऽनाप्तकामान् प्रति भविष्यदित्यथापराहुर्हि-
स्थाना देवा भवन्ति न्यून मन्यत् स्थानए सम्पूर्ण
मन्यद्यद्ध ह न्यूनं तदितः प्रत्तैः प्रति विभवन्ति यद्
सम्पूर्णं तत्याशिषः समर्द्धयन्तीति ॥ ३ ॥

अथ नु खल्वङ्गकामा इति विद्यन्त इत्येके श्रुति-
प्रमाणा श्रङ्गे श्रूयमाणां कथं क्रतौ प्रतीयामेत्यथापि
योऽङ्गकामं क्रतुं कामयेतापि नूनं सोऽङ्गे दुष्टे सर्वं
मेवापि क्रतुं दुष्टं मन्येताथापि पृष्ठहोमए सर्वेषाए
स्तोत्राणां मन्येतेति क्रतुकाम इत्यपरं क्रतुः खल्व-
धिक्षतोऽङ्गैश्च कामैश्च भवत्यथापि न चार्षेयकल्पो
दर्शयति यज्जातीया प्रतिपद्भवति तज्जातीयानि
द्रव्याणि कल्पयति यथा ज्योगामयाविनो वर्षकामस्य
जग्या माविधित्समानस्येत्यथापि योऽङ्गकामं मन्ये-
तापि नूनए स तदेवाङ्गं कृत्वा विरमेत्तस्मिन् हि स
कामो भवतीति यदेतदङ्गदोषात् क्रतुदोष इति
विषये खलु दोषो भवति न तथाकामो यद्वेतत्पृष्ठ-
होमए सर्वेषाए स्तोत्राणां मन्येतेति भवन्ति वा
अङ्गधर्मा यथा युग्यस्य वासदान मचक्षोपाञ्जन

मिति सम्भूय तु खल्वर्थान्त्साधयन्तीति कथ मु ब्रह्म-साम्नि कामागान मिति यथाकामी कामाना मित्येक आहुरनादेशे कि मन्यद्याथाकाम्यात्यतो-यामाथाथि रदस्यब्राह्मणे दर्शयति यथाकामी कामाना मिति क्रतुकाम इत्यपर मेषोऽधिकृतोऽथापि यः क्रतुकामेऽधिकृते सत्यन्यं काम मुत्पादयेदपि नूनं स पशुना तृतीयसवने चरन्तीत्यन्यपशु मुत्पा-दयेदो मिति सति समायादपेयादाद्या वै त मेव प्रतीयाद्यः प्रतिसवने सदृशं व्याहन्याद्यदेतदनादेश इत्यादेशजातिरेषा भवति तदादधिकारो यदेतद्ब्र-ह्मब्राह्मणे दर्शयतीति सर्वाभिप्राय एतदुपपद्यते कथ मु खल्वाशीः समृद्धिरुपसरणानीति सर्वस्तोत्रे-ष्वित्येक आहु स्तोत्रशब्देन च न हि स्तावयत्यपि चाह निर्देशे किमर्थो ऽवयवं प्रतीयादिति ब्रह्मसाम्नीत्यपरं ब्रह्मसाम ह्याशीर्द्धान मित्यथापि य स्तोत्रशब्दानां-स्तोत्रे प्रतीयादाशीःशब्दादपि स नाब्रह्मसाम्नि प्रत्येतु मर्हतीति ॥ ४ ॥

अथातो यज्ञस्थानान्यपि च सन्धियज्ञा इत्या-चक्षते ऽहोरात्राभीज्याग्निहोत्रं सायमाहुत्या रात्रि मभियजते सा यत्र क्व च पुरोदयाद्धूयेत स्वे

स्थाने जुहोमीति विद्यात्मातराहुत्याह: सा यत्र क्व च पुरास्तमयाद्धूयेत स्वे स्थाने जुहोतीति, विद्यात् ते तु यदादौ निदधाति प्राप्तस्य होमकालोऽपि चैनं कृत्स्ने अहोरात्रे अभीष्टे भवत इति पूर्वपक्षापरपक्षाभीज्या॰ दर्शपौर्णमासौ पौर्णमासेन हविषा ऽपरपक्ष मभियजते स यत्र क्व च पुरा ऽऽमावास्या यजेत स्वे स्थाने यजत इति विद्यादामावास्येन पूर्वपक्षं स यत्र क्व च पुरा पौर्णमास्या यजेत स्वे स्थाने यजत इति विद्यात्तौ तु यदादौ निदधाति प्राप्तस्य यज्ञकालोऽपि † वैधं कृत्स्नौ पक्षावभीष्टौ भवत इत्युक्ताभीष्टा चातुर्मास्यान्योषधिभक्षाभीज्याग्रयणेष्टी उदगयन-दक्षिणायनयो: पशुसमस्तस्य संवत्सरस्याभीज्या सुत्येति तदखल्वेतत्पक्षव्ययुक्त माहिताग्ने: कुशलेन यदग्निहोत्रं दर्शपूर्णमासौ चातुर्मास्यान्याग्रयणेष्टी (पशु सोम इति वै‡) सत्रं य देवं न करोति बलायदिज्याए स्यादित्यननुभूतिजए स्यादिति सिद्धिदर्शी वा स्यान्मूलिपुरोडाशेनाप्नोत्याज्येन च पयसा च प्राणीत्यथाप्याहुरादित्यस्य वाव खलु चन्द्रमाग्नि-

---

* क–पुस्तकेऽत्र पूर्वनापरत्र च सर्वत्रैव "॰भीष्टा"–इति पाठ ।

† "होमकालोऽपि"–इति क ।

‡ मास्थेपोऽत्र क–पुस्तके ।

स्येमानि पर्वाणि कुरुतो ययोरिय मभीज्या भवती-त्यग्निहोत्रेणादित्यस्येज्या समियजते दर्शपूर्णमासा-भ्यां चन्द्रमसस्तदग्निहोत्रम् सायमाहुत्या प्रयुज्यते प्रातराहुत्याभितिष्टते सोऽपि नाहुत्वा प्रातराहुति मन्यं यज्ञ मुपक्रमते कथं पूर्वस्मिन्ननिष्ठितेऽन्य मुप-क्रामेतेति पौर्णमासेन हविषा दर्शपौर्णमासौ प्रयु-ज्येते आमावास्येन निस्तिष्ठते सोऽपि नानिष्ट्वामा-वास्येन हविषान्यं यज्ञ मुपक्रमते कथं पूर्वस्मिन्ननि-ष्ठतेऽन्य मुपक्रामेतेति ॥ ५ ॥

तदपरपक्षे प्रायणं परिजिहीर्षितं भवति रात्रौ वा यज्ञविलोपो विसंस्थितेऽपि च नो ह तमस एव तम इयादिति तस्त्रे दपरपक्षे प्रायणम् यद्धैत यावत्यो ऽपरपक्षस्यातिशिष्टा रात्रयः स्युस्तासाम् सायं प्रात-राहुतीः प्रतिसङ्ख्याय हुत्वा-मत्याहुत्या ऽऽमावास्येन हविषेष्ट्वा समापयेयुरेव मयज्ञविलोप इति पूर्वपक्षे चेद्रात्रौ प्रातराहुति मेव पुरस्तादाहवनीयम् हरेयुः पश्चाद्गार्हपत्यं दक्षिणतो दक्षिणाग्निं मध्ये शरीरं तं दक्षिणाशिरसं चितावाहितं यज्ञपात्रैः कल्पये-दध्वर्युः शिरसि कपालानि युञ्ज्यात्समन्तधानं च चमसं ललाटे प्राशित्रहरणं नासिकयोः स्रुचौ कर्ण-

स्थाने जुहोमीति विद्यात्मातराहुत्याहः सा यत्र क्व च पुरास्तमयाद्धूयेत स्वे स्थाने जुहोतीति, विद्यात् ते तु यदादौ निदधाति प्राप्तस्य होमकालोऽपि चेनं कृत्स्ने अहोरात्रे अभीष्टे भवत इति पूर्वपक्षापरपक्षाभीज्या* दर्शपौर्णमासौ पौर्णमासेन हविषाऽपरपक्ष मभियजते स यत्र क्व च पुरा ऽऽमावास्या यजेत स्वे स्थाने यजत इति विद्यादामावास्येन पूर्वपक्षं स यत्र क्व च पुरा पौर्णमास्या यजेत स्वे स्थाने यजत इति विद्यात्तौ तु यदादौ निदधाति प्राप्तस्य यज्ञकालोऽपि † वैधं कृत्स्नौ पक्षावभीष्टौ भवत इत्युक्ताभीष्टा चातुर्मास्यान्योषधिभक्ताभीज्याग्रयणेष्टी उदगयन-दक्षिणायनयोः पशुसमस्तस्य संवत्सरस्याभीज्या सुत्येति तत्खल्वेतत्सक्रमयुक्त माहिताग्नेः कुशलेन यदग्निहोत्रं दर्शपूर्णमासौ चातुर्मास्यान्याग्रयणेष्टी (पशु सोम इति वै‡) सर्वं य देवं न करोति ग्लायदिज्यां स्यादित्यननुभूतिजं स्यादिति सिद्धिदर्शी वा स्यान्मूलिपुरोडाशेनाग्नीत्याज्येन च पयसा च प्राणीत्यथाप्याहुरादित्यस्य याव खलु चन्द्रमाग्नि-

---

* क-पुस्तकेऽत्र पूर्वत्रापरत्र च सर्वत्रैव "०भीष्टा"-इति पाठ ।

† "होमकालोऽपि"-इति क ।  ‡ नास्त्येषोऽंश क-पुस्तके ।

स्येमानि पर्वाणि कुरुतो ययोरिय समीज्या भवती-
त्यग्निहोत्रेणादित्यसेज्या मभियजते दर्शपूर्णमासा-
भ्यां चन्द्रमसस्तदग्निहोत्रम् सायमाहुत्या प्रयुज्यते
प्रातराहुत्याभितिष्ठते सोऽपि नाहुत्या प्रातराहुति
मन्यं यज्ञ मुपक्रमते कथं पूर्वस्मिन्ननिष्ठितेऽन्य मुप-
क्रामेतेति पौर्णमासेन हविषा दर्शपौर्णमासौ प्रयु-
ज्येते आमावास्येन निष्तिष्ठेते सोऽपि नानिष्ट्वामा-
वास्येन हविषान्यं यज्ञ मुपक्रमते कथं पूर्वस्मिन्ननि-
ष्ठतेऽन्य मुपक्रामेतेति ॥ ५ ॥

तदपरपक्षे प्रायणं परिजिहीर्षितं भवति रात्रौ
वा यज्ञविलोपो विसृष्टिस्थितेऽपि च नो ह तमस एव
तम इयादिति तच्चेदपरपक्षे प्रायणम् स्यात्ते यावत्यो
ऽपरपक्षस्यातिशिष्टा रात्रयः स्युस्तासाम् सायं प्रात-
राहुतीः प्रतिसङ्ख्याय हुत्वा-मत्याहुत्या ऽऽमावास्येन
हविषेष्ट्वा समापयेयुरेव मयज्ञविलोप इति पूर्वपक्षे
चेद्रात्रौ प्रातराहुति मेव पुरस्तादाहवनीयम् हरेयुः
पश्चाद्गार्हपत्यं दक्षिणतो दक्षिणाग्निं मध्ये शरीरं तं
दक्षिणाशिरसं चितावाहितं यज्ञपात्रैः कल्पये-
दध्वर्युः शिरसि कपालानि युञ्ज्यात्स मन्तधानं च
चमसं ललाटे प्राशित्रहरणं नासिकयोः स्रुवौ कर्ण-

योर्वाग्रे हिरण्य मवधायानुस्तरणिक्या गोर्वपया मुखं प्रच्छाद्यं तत्राग्निहोत्रहवणीं तिरश्चीं दक्षिणे पाणौ जुहूᳪ सव्य उपभृतं पार्श्वयोः स्फ्योपवेषौ तथा वृक्कौ यथास्व मुरसि ध्रुवा मुदरे पात्री मुपस्थे कृष्णाजिन मन्तरेण सक्थिनी शम्या दृषदुपले यव नादेष्ठ्यामो दक्षिणस्योपस्थ दक्षिणत उलूखल मनुसक्थि मुसलं पादयोः शकटशूर्पं सर्वाण्युत्तानान्यासिचनवन्ति पृषदाज्येन पूरयित्वाथैनं यथास्थानं युगपदग्निभिरुपस्जेरसार्वस्मानिकं परिमाणᳪ स एष यज्ञायुधी यजमानः स्वर्गं लोक मेतिति ब्राह्मणं भवत्याज्ञतिं जुहोति पुत्रो भ्रातायो वान्यो यज्ञियो ब्राह्मणस्त्वस्मात्त्व मधिजातो ऽसि त्वदयं जायतां पुनरसौ स्वर्गाय लोकाय स्वाहेति शान्तिर्वाम देव्यᳪ शान्तिर्वामदेव्यम् ॥ ६ ॥

एकहिङ्कारं वहिष्पवमानᳪ साम्नश्चैकत्वाच्छन्दसश्चेत्याचार्याः साम्ना मनु नानात्व मुत्तरयोः पवमानयोः पृथग्धिङ्कारा भवन्ति पर्यायाणा मनु नानात्व मावर्त्तिषु सर्व्वौ * विप्रतिपद्यन्त एकहिङ्कार इत्येके यथा वहिष्पवमानं त्रिराचार्या हिं

* "साहितसर्व्वौ"–इति वा पाठ ।

कुर्वन्ति देवतानामनु नानात्वं विश्वजितो वा अपि वादेवतं पविष्यमाणमथात्र सकृद्धिङ्करोति सकृद्धिं-करोत्यादृत्वाद् पविष्यमाणस्यैवाचार्या अथ यज्ञा-यज्ञीयानुरूपे कथद् हिङ्कार इति यथोत्तरयोः पव-मानयोरित्येके ऽस्ति हि सामनानात्वं यथा वा विश्व-जिति नानादेवते सति सकृद्धिङ्करोति सकृद्धिङ्करो-त्यादरत्वात्पविष्यमाणस्य तथा वा आदित्यव योनौ यज्ञं तत्वानथा कयन्तरे तथा रथन्तरवर्णं याता मित्युभे ययाताना याता मिति पविष्यमाने चोत्पन्ने भवतो न चापि नियर्त्तयत्यपि यथा गायत्रं यज्ञायज्ञीयधर्मान्प्रतिपद्यत एव मपि यज्ञा-यज्ञीयं गायत्रधर्मान् प्रतिपद्येत गायत्रस्य पवि-ष्यमाण एव धर्मो भवतीत्यपरं चान्यत्र गायत्रात्र चान्यत्र पविष्यमाणादिति॥ ७॥

गायत्रस्य काम्याः सामान्ता यावत्त्रिगदद् भुरि-तोऽस्य स्वरस्तेन प्रत्याम्नाया भवन्ति न च क्रियर्थाऽयद प्रतीयादित्ययाध्येव मध्याहतं गायत्र भवत्यथापि याग्याकाम्यत्वाविपर्यासमत्कुम्भ मथाप्येव प्रयोगाणां धर्मो येन प्रक्रमस्तेन समाप्तिरिति पविष्यमाण इत्यपर सेतन्नायथत विकारस्तान मथापियात्कुराद्

सामान्ता नातियन्त्यथापेत्व मनामि भवत्यथापेत्वं यथाभूयिष्ठं भवतीति प्रथमाया मिति वार्षगण्य एतद्वद्दिष्पवमानस्याशीर्द्धान मत्र हि काम्याः प्रति पदो भवन्तीति रथन्तरवर्णाया मित्यपर मेषा विक्लततमापि च पथ्यप्रक्रमं पथ्यावसानं भविष्य तीति ब्रह्मण आज्य इत्यपरं ब्रह्मसाम ह्याशीर्द्धा मित्युत्तरयोः पवमानयोरित्यपर मेतद्देतिपाए सामा न्तानां स्थान मथापेत्वए रोहो भवत्यपि वान्ताप्याि कर्माणीति यदेतज्जामीत्यजामि वा कल्पयेतार्थी ऽजामिकरण इति वापि तितिचेतान्त्येके गाय गायन्ति कस्य हेतोरिति स्वरायैतत्स्थानं कुर्वते स इत्थं केवलः स्वरो गातो भविष्यतीति तथा प्रच्चवि प्रस्तुत्यान्तचि गायन्तः प्रतिहारच्च चानुत्वाद म पायाच्च निधनच्च चानिधनं स्वरित्वा निधन मृत्वी देदित्याचार्याः ॥ ८ ॥

अथ वृहद्रथन्तरयोर्वदति तयोः समानं निधं मासीत्तच्छिन्नातिष्ठेता मिति किन्निधन मित्यद रिति * कौत्सो ऽकार मेवान्ये सकारोपसृष्टं सका मेवाह मनयोः समानं निधनं मन्य इति धानञ्जय

* । "ति इरिति"—इति ख ।

स च्युमयन दृश्यत इति निधनब्राह्मण मेवाह मिदं मन्य इति वार्षगण्यो द्वे खल्विमे पृष्ठे भवत एकं पृष्ठस्थानं तस्मिन्नखाईथा महं पूर्वताया इत्यथैतेषु पुरस्तात्पेषु वा इत्येतद्दद्येदित्येक आहुरेतानि मनसान्वोच्योद्गायेदिति हि भवतीत्यन्यदिदं तेभ्यो भवतीति यथाधीत मित्याचार्या न चोदासो विज्ञायते ऽपिवार्थः ख्याइयक मथापि सद्दशये लोपो लोपाच्यायतर इति कथं पवमानगतयोरिति कर्त्तव्या इत्येके सामसंयुक्ता हि भवन्त्यकर्त्तव्या इत्यपरं स्थानसंयुक्ता हि भवन्त्यथापि पवमानसामनी प्रधानभूते भवत इत्यथापि यद्यु हैताग्पुरस्तात्स्तोत्रादकरिष्यद् द्वावेतावन्ये: सामभिरभविष्यन् यद् द्वानन्तरात्स्तोत्रव्यवायो ऽभविष्यदेतेन वामदेव्ययज्ञायज्ञीये व्याख्याते वृहतः स्तोत्रोत्तमायां ब्राह्मणोक्तानाट् रोहाणा सुत्तमं न रोहेदित्याचार्या अप्रथमायेवं ह्याह वृहतो रोहा वृषी मह्रा मदायिषु वान्तौ पूर्वौ वृद्धौ ।नधनोपाये च द्वितीय मक्षरं वर्द्धयेत्स तृतीयन्तदुपरिष्टात्स्तोत्रस्य प्रत्यवरोहेदेतद्व हि स्म युवान मृत्विज मनूचानं प्रेत माहुर्वृहदेन मप्रत्यवरूढं परावधीदिति ॥ ६ ॥

अथ यज्ञायज्ञीयस्तोत्तरयोर्द्वाचरेण प्रभीति यथा

बृहद्रथन्तरयोस्तदपि शश्वद्ब्राह्मणं भवति तानि ह वा एतानि द्वादशाक्षरप्रस्तावानि ककुबुत्तराणि सामानि बृहद्रथन्तरे यज्ञायज्ञीयं चेत्यथ खल्वाह यदग्निष्टोमयाज्यन्तत माह तदन्वस्य यज्ञः सवत्य-क्षरेणान्ततः *प्रतिष्ठाप्य* मिति किं मन्तत किं मक्षर मिति वेत्येतदक्षरं वकारादि राकारो गकाराल इत्येक आहुस्तस्य गकारलोपं ब्राह्मणं चिपतीति तदपि त मुपेयुरेवं कृत्स्नेनाक्षरेण यज्ञस्य छिद्र मपि दधातीत्यार्चिक मेवैतदक्षर मित्यपर मेतस्मिन्हा-ऽक्षरशब्दात्मतियन्त्यष्टाक्षरेण प्रथमाया ऋचः प्रस्तौ-ति द्व्यक्षरेणोत्तरयोश्चतुरक्षरेण बृहतः प्रतिहर-तीति न स्तौभिकैः सहोपपद्यते तस्माद्यदेवान्त्य मक्षरं तन्निधन मुपेयुर्यथाधीत मित्याचार्याः स्वर-न्तान्यक्षराणि भवन्ति स्वरान्तता मेवाक्षरस्यैतद् ब्राह्मण मेव भवत्य दित्यथापि बहुलैषा छन्दसी वृत्तिर्वाड्धिनानि चैनान्याचक्षते वाग्वपायानीति च यदेतदार्चिक मक्षर मिति यथाधिकार मेत-द्भवति स्तौभिकस्येहाधिकारो विज्ञायते ऽथापि संशये प्रकृतिसविध मेव प्रत्येतव्य मिति प्रत्येतव्य मिति ॥ १० ॥

अथ द्रव्यसमुद्देशो राथन्तराणि रथन्तरपृष्ठेऽभिरूपाणि बार्हतानि बृहत्पृष्ठेषूभयविधावुभयसाम्नि प्रवदितानि रथन्तरपृष्ठ ऊर्ध्वेडानि बृहत्पृष्ठेऽथ यत्र रथन्तरपृष्ठे बार्हतानि क्रियेरन् बृहद्दोषया तानि विद्यादेव मैव बृहत्पृष्ठेन राथन्तराणि स्वयोनीनि सर्वत्राभिरूपतराण्यस्वयोनिभ्यः सामन्याक्रँ ऋचाम सामन्याभ्यश्छान्दसी प्रथमाः सामन्या इत्याचक्षते ऽथ या यज्ञप्रवादाः सत्रप्रवादाः क्रतुप्रवादाः स्तोमप्रवादाः सर्वत्र ता अभिरूपाः शुक्रवत्यो ऽप्रवादाः पूर्वयोः पवमानयोर्होतृप्रवादꣳ हविष्प्रवादꣳ समिद्धवद्धोतुराज्यꣳ हूतवन्ति पीतवन्ति द्रप्सवन्त्युत्तराणि मरुत्वत्यो द्युप्रवादा ऋतवत्यो माध्यन्दिनीयाः परिवत्यः कौशवत्यो निपस्तवत्योमाध्यन्दिनीया गायत्र्यां वातस्त्रिष्टुभि वा मरुत्वच्चिकीर्षितं भवत्यथ खल्वाहुः त्रीणि सवनानां छिद्राणि तानि तेनापि धीयन्त इति कतमानि छिद्राणीति पवमाना अदेवतास्तुतयास्तानि छिद्राणीत्यथाप्यन्तरेण पवमानाꣳस्त्वावर्त्तीनि च हविर्भिः प्रचरन्ति तानि छिद्राणीति वामदेव्यं मैत्रावरुणसाम सर्वत्राभिरूपं तदपचारे तल्लिङ्गीयाग्निकीर्देथैतानि तार्तीयसवनिकानि रूपाणि स्वादुमत्यो

मधुमत्यो मध्वत्यो विशुवत्यश्विवत्यः सूर्यवत्यो दधिगवद् योनिदूतवच्च वृद्धवचोकथिव्वथ नार्मेध-स्तोत्रीये वदति ककुप् प्रथमा योष्णिगथ पुर उष्णि-गनुष्टुबिति ककुबेव प्रथमोष्णिग्द्वितीया पुरउष्णिक् हरी ।द्वाराग्नयेनाध्यायेन तां बहूचा अधीयते युञ्जन्ति हरी इषिरस्य गाथयोरौ रथ उरुयुगे इन्द्रवाहा वचो युजेति तत्र वयं चत्वार्यक्षराण्युपाहराम: स्वर्विदेति सानुष्टुब् भवत्युपरिष्टाज्ज्योतिः ॥ ११ ॥

काथ नु षोडशी ज्योतिष्टोम इत्यकर्त्तव्य इति शौचिवृक्षिरन्तरिते ब्राह्मणसमाम्नायेनेति कर्त्तव्य इति गौतमः षोडशिनः स्तोत्रे दृश्येति हि भवतीत्य-थापि न आर्षेयकल्पो दर्शयति द्वादशाहस्य षोडशि-मन्तावतिरात्राविस्यथापि मन्त्रवर्णो भवति त्रीणि ज्योतींष्यपि सचते स षोडशीति निरूपेतो द्वाद-शाहो भवतीति वैतद्भवति संख्या मध्यस्थेतां विद्यमानां मन्य इति गौतम एवं च रहस्यब्राह्मणो दर्शयत्यथ तेन षोडशिसंख्येन यजेतेति नाहास्यैषा संख्या विद्यत इति शाण्डिल्योऽतिरात्रे तु कृताकृतो-भवत्येव मित्राध्वर्युब्राह्मणं भवति नोक्थ्यो याह्यो *

* "नीयवाह्यो"—इति क।

ऽतिराचो याह्य इति सम्भी इमौ भवत इति धान-
ञ्चय्य उदयसम्भिरसावस्तमयसम्भिरपीतस्माद्य: कथा
तिराचः षोडशिमानेव स कुशलेनेति तस्यैता ऋचः
पञ्चविंशत्यक्षराः पञ्चपदाः पञ्चाक्षरपादा नवो-
पसर्गाक्षराश्चादितस्त्रयाणां पादानां त्रीणि त्रीण्यु-
पसर्गाक्षराणि पादान्तेषु भवन्ति ते ऽष्टाक्षराः
सम्पद्यन्ते पञ्चाक्षरावुत्तरौ दशाक्षरावेकसाश्चतु-
स्त्रिंश्च दक्षराः सम्पद्यन्ते न स्वा उपसृष्टाः कनो विद्या
मे तीर्थं होत वय मधीमहे तथा वह्नुचा इति
ब्राह्मणेनेरयाहुश्चतुस्त्रिंशदक्षराः सत्स्तुतौ भवती-
त्यनुपसृष्टः कनीयानितीवैतन्नवत्यथाप्यभीयमाणेषूप-
सर्गाक्षरेषु नैवार्थो हीयते न वृत्तिर्दुष्यरयथापि शम्-
देना अनुपसृष्टा आथर्वणिका अधीयतेऽथापि निर्द्धा-
रितानामुपसर्गाक्षराणां वदत्यज वा एता एकपदा
स्त्र्यक्षरा विष्णोश्छन्दो भुरिजः सक्षर्य इति चाक्षरा
ह्यपि भुरिजो भवन्तीति तचैतद्गौरिवीतं गायत्री
सामाभ्यासानुष्टुभं राचा समानभाग: समान-
भवो भवतीति स यद्गौरिवीत्य इमा ऋचो ऽस्वयोनिं
कुर्वंत ऋषिः स्वयोनिर्भविष्यन्तीत्यतेन सौभरना-
मेधे व्याख्याते रेवतीषु च वारवन्तीयम् ॥ १२ ॥

ज्योतिष्टोमोत्याद मेव षोडशिनं ब्रुवते तत्र चास्य ब्राह्म ॥ मधीयते ऽथापि कथ मेवं कृत्स्नं कर्मा-कृत मन्तारयिष्यदिति चतुर्थीत्यादं वयं तत्र चास्य ब्राह्मण मधीमहे ऽथाप्याहैकविंशायतनो वा एष यत्षोडशीति तद्देकविंश मह्भवत्यथा प्याह दाश-तय्य ऋचो यातुरुत्तरं छन्दःक्रमे वा एवंविध मुत्प-द्यते न प्रथमकृताविरयज्ञो भवती३ रात्रेरियज्ञो भवतीत्याहुरहवर्जं चास्य हविर्भवत्यथापि नियुक्त-धर्मा भवति निबद्धाञ्छिल्पवान्यहवान्यथाहरेवं रात्रेरियमरं रात्र्या समानभागः समानमथो भव-तीति तौ खल्विमौ द्वौ सम्भौ भवतस्तयोरसौ नित्यः कृताकृतोऽयं कस्य हेतोरिति साद्धं तेन रात्रिः पञ्चदशविधता लभते कृतं पञ्चदशविध महरित्य-थापि न त मुद्रृत्य पराक् स्तोत्रं रात्रावलम्मात कृतान्यैन्द्राण्यथापि विद्यते तस्य कालस्य स्तुति-र्नास्य विद्यते कस्मात्तु तस्य न विद्यते पराङेतस्यां वेलाया मादित्यो भवति नोपरा च स्तुतिर्विद्यत उदाहरन्ति त्वेव परां च स्तुतिं हिरण्यस्तूपे भवत्य-स्यादेवः प्रति दोषं गृणान इत्यथ खल्वाह शक्करीषु षोडशिना स्तुवीतेति तत्रैके महानाम्नीः प्रति

यज्ञ्येताः शक्वर्यो भवन्तीत्येतास्वेव शक्वरीप्रवादो भवतीत्यपर मेतार्थाधिकृता भवन्तीत्योङ्कारो विशेषः श्रुतः सर्वसामसु त्वादित्येके स वाचा रथन्तरेण निवर्त्तेत यथा त्र्यस्त्रिंशं तृतीयसवन मित्यभिपरीत्य प्रत्यपकर्षस्तादृश मेतद्भवति समुच्चयो वा नानार्थत्वात्प्रस्तावशान्त्यर्थो हि वागुद्गीथादिशान्त्यर्थं ॐकारो वाक् पूर्वा स्यादेवं यथान्तरप्रत्यासत्तिरुत्तरा वाजवन्त्यविधेराचाराच्च ॥ १३ ॥

॥ इति निदानसूत्रे द्वितीयः प्रपाठकः ॥

---

॥ अथ तृतीयः प्रपाठकः ॥

अथ का प्रथमा सᳲस्थेत्याग्निष्टोमो प्रथमा मन्य इति शाण्डिल्यः प्रथमाᳲ ह्येव स्थानं भवत्यथापि प्रथम मधीमहेऽथाप्यणुप्रमुखानि भूतानि भवन्ति परीवरीयाᳲस्यथाप्याह यज्ञमुख मग्निष्टोम इत्यथाप्येतया सᳲस्थया चरत्यथाप्येषा समारब्धतमा भवतीत्यथापि नाग्निष्टोम मकृत्वापरे सᳲस्थे करोति न ह्यनुं-

पादाय प्रथमा मुत्तरयो; सिद्धिरस्त्वनुपादाय उत्तरे प्रथमा सिध्यतीत्यथाप्याह प्रजापतिर्वा एषा सᳪ-स्थानां यदग्निष्टोमस्तां यदकृत्वाथान्यां कुर्यात्प्र-जापतिरस्य हिᳪसितः स्यादिति यावदादेश मुत्तरे सर्वत्रायाप्यूर्ध्वाना मेव सᳪस्थानां कृतानां वदति देवा वा अग्निष्टोम मभिजित्योक्थानि नाशक्नु-वन्नभिजेतुं देवा वा उक्थान्यभिजित्य रात्रिं नाशक्नु-वन्नभिजेतु मित्यथापि नैतद्देवताः प्राहू राका सिनी-वाली सरस्वती विष्णुरिति सौविष्टकृतं खल्वेतत् सोमस्य स्थानं यदाग्निमारुतं स योऽयं देवताः शᳪ-यिषस्ता अपातिरात्रे सती हैव प्र व्याहृत्य शᳪसती-त्युक्थं तां प्रथमां मन्य इति गौतम एवं प्राम्नाह-सोऽत्रासमानि सवनान्यपाक्रियन्त आर्भवच्छन्दाᳪस्यनु विधीयन्ते प्रस्थितयाज्या ग्रहैश्च शस्त्रैश्चापाह मेत मेव मागूर्त्तिं मिव मन्ये यो ऽग्निष्टोमयाजीति ध्रुव मनु द्वादशस्तोत्रात्पूर्वं तत्प्रस्थितयाज्याभिर्वि-जानीम इति ॥१॥

अतिरात्रीं प्रथमां मन्य इति धानञ्जय्यः कृत्स्नं पूर्वं कर्मापरीपादाया इत्यथापि स मिमीत एषा वा अग्निष्टोमस्य सम्मा यद्रात्रिरेषा वा उक्थ्यस्य सम्मा

यद्याग्निरिति कुतो दृष्टेन प्रमा स्यादित्यथापि नः स्तोमसमाम्नायः प्रागतिरात्रस्यैव स्तोमसमाम्नायो भवत्यथापि न उक्थ्यसमाम्नायः प्रागतिरात्रस्यैव प्रथम मुक्थ्यानि समामनामो ऽथापि नेकर्मणो यज्ञं सन्धिं प्राहुरुपरि सन्धिभचात् स्तोमविमोचन मधीमहे यन्नून मन्या प्रथमा सᳫंस्था भविष्यत्याक्षरᳫं सोमविमोचनᳫं समाम्नास्यदित्यथापि ग्रश्वद् बह्वृचा अतिरात्री मेव प्रथमा मधीयते तासां काम्या का सर्वाभिप्रायेत्याग्निष्टोमीं चातिरात्रीं च ब्रुवते यौचिवृधाः सर्वाभिप्राये चनवधारितकामे भवत इत्येकत्था अन्यो यज्ञः कामायाग्नियते सर्वेभ्यो ऽग्निष्टोम इति न काम मवधारयति ज्योतिष्टोमेनातिरात्रेणर्द्धिकामो यजेतेति नैव काम मवधारयति पशुकाम उक्थेन स्तुवीतेति काम मवधारयति सोऽयिथिला परिसᳫंस्थिता भवतीति सर्वाः सर्वाभिप्रायाः सर्वासु काम्यानि विद्यन्त इति शाण्डिल्यस्तथा गौतमधानञ्जय्यौ सर्वाभिप्रायः खल्वयं ज्योतिष्टोमः स सर्वाभिरेव सᳫंस्थाभिः सर्वाभिप्रायो भवतीति यद्वेतदवधारितकामेति पश्यामो वै वयं सर्वाभिप्रायेषु

* "कर्मणो यज्ञमि"—इति क।

कामसवधार्यमाणं ,यथोपवती ग्रामकामस्य प्रतिष्ठाकामस्य रथन्तरं सम्भिषामेति ॥ २ ॥

तस्य खल्वस्य ज्योतिष्टोमस्य षड् व्यञ्जनस्थानानि भवन्ति प्रतिपद् गायत्रं त्रिणिधनं विष्टुतिर्ब्रह्मसामोक्थप्रणयः सम्भिसामेति तेषां किं काम्यं किं सर्वाभिप्राय,मिति प्रतिपद्यत् खल्वस्य ज्योतिष्टोमस्य चरति तत्तत्सर्वाभिप्राय मथ यत्काम्यं निवर्त्तते तत्कामप्रतिपत्सर्वाभिप्राया सर्वा ह्यवधारितकामा भवन्तीत्युपवतीत्याहुः प्रथमान्वेना मधीमहे ऽपि तां ग्रामकामस्य ह ग्रामः सर्वाभिप्रायो भवतीत्यथापराख्याश्चिरं दर्शयति ततश्चतुर्षु मासेषु शुनाशीर्यस्य लोके ज्योतिष्टोमोऽग्निष्टोम उपवती प्रतिपदित्येषा रथन्तरपृष्ठे ऽग्नियवती बृहत्पृष्ठे ऽग्नियवद् वार्त्तं रूप मुपवती रथन्तरे ऽग्नियवती बृहतीति च भाल्लविना सथापेनाह् साहस्रोत्तमे स्तोत्रीयस्योत्तमां दर्शयत्योभयसाम्यात्तां न प्रथमां ब्राह्मणेनैव तद्व्याख्यात मथाप्याहाभिषेचनीये यत्पवस्व वाचो अग्रिय इति तेन यज्ञमुखान्नयन्तीति प्रकृत्या प्रश्रयं दर्शयति तदपि शश्वद् ब्राह्मणं भवतोऽते वाव प्रतिपदौ सर्वाभिप्राये यदुपवती चाग्रियवती च कामाय वा

इतरा आङ्गिरस्यं इति खरो गायत्रविधनानां प्रथमा(३*) विष्टुतीनां श्यैतनौधसे ब्रह्मसाम्नां षडुक्थ्यानि सर्वाभिप्रायाणि भवन्ति साकमश्वं सौभरनार्मेधे हारिवर्णीदृश्रीये आष्टादंष्ट्र मिति तेषां कान्युक्थ्ये कान्यतिरात्र इति सर्वेषां याथाकामीति शाण्डिल्यो हारिवर्णीदृश्रीये वा हारिवर्णाऽष्टादंष्ट्रे वोक्थ्यान्ते कुर्यादिति गौतमो ऽतिरात्रे सौभरनार्मेधे तत्त्वय्यां जानीमो हारिवर्णीदृश्रीये वा हारिवर्णाष्टादंष्ट्रे वोक्थ्यान्ते चैव कुर्यादतिरात्रे चेति धानञ्जय्यः सौभरनार्मेधे वोक्थ्यान्ते न कुर्यादिति रथन्तरं सन्निपात्यात् सर्वाभिप्रायं तद्विचरति तत्र यानि कामावधारणानि सर्वाभिप्राये स्तुतानि भवन्ति तानि खल्वेतानि व्यञ्जनान्येकजातीयान्येव समादध्यादेवं चाव्याहतः क्रतुर्भवत्यपि चैव मार्षेयकल्पो दर्शयति ॥ ३ † ॥

अथानुष्टुभस्य भागस्य का छन्दोभक्तिरित्येकाक्षरां ब्रुवते शौचिवृक्षास्तद्विजानीमो बह्वक्षरप्रवादो भवत्येकाक्षरा वै वागक्षरेणान्ततः प्रतिष्ठाप्य सक्षरं नाक्षर मुच्छिष्यत इति हि भवतीति मत्तैव

* स पुस्तकेऽयं वैदो नास्ति। † "४"-इति क।

द्वात्रिंशदक्षरेति शाण्डिल्यस्तथा गौतमधानञ्जय्या-
वेता मनुष्टुबित्याचक्षते ऽथापेऽना मनुष्टुवर्थं निधी-
यमानानां पश्यामो ऽथापि यस्मात्तदकुशलं छन्दसा
मौक्थिकं मनुष्टुभं पृष्ठेदेता मेव द्वात्रिंशदक्षरा
माचक्षीत तत् खलु गायत्रं प्रातस्सवनं त्रैष्टुभं माध्य-
न्दिनए सवनं जागतं तृतीयसवनं यदूर्ध्वं मुक्थेभ्य
आनुष्टुभः स भाग इति क्व नु द्वादशस्तोत्र
आनुष्टुभो भागः स्यादिति सवनानि प्रति प्रविष्ट
इति गौतमो ऽष्टाक्षरा गायत्री हिङ्कारो नवम एका-
दशाक्षरा त्रिष्टुप् द्वादशाक्षरा जगती छन्दोभिरेवा-
नुष्टुभ माप्नोति यजमानस्यानवलोपायेत्यन्तन्त्वस्यान
एष भाग इति शौचिवृक्षिरेकविंशस्तोमो याक्सा-
मान्य एष नूनं द्वादशस्तोत्रस्यानुष्टुभो भाग
स्यादिति। सर्वैव षट्त्रिंशदक्षरेति शाण्डिल्यस्तत्रैव
यच्चत्वार्यक्षराण्युपाहरति परोक्षौचिकीर्षन्निति पद
प्रत्यवरोपण' शौचादितरेयो यथैतद् ब्राह्मणं द्वाद
शाक्षर मेकादशाक्षर मष्टाक्षरं वाग् द्वात्रिंशील्या
पञ्चदशस्तोत्रे सवनानि प्रति प्रविष्ट इत्येव गौतमं
ऽच्छावाकस्तोत्रीये शौचिवृक्षा अथ षोडशिनि सर्वै
चतुस्त्रिंशदक्षरेति शाण्डिल्यस्तत्र यद् द्वे अक्ष

उपाहरति परोक्षोचिकीर्षन्निव्युपसर्गाक्षराणि शौचिवृक्षा दशाक्षरं पादं शौचादितरेयो ऽक्षातिरात्रे सर्वेव द्वाविंशदक्षरेति शाण्डिल्यास्तां यदभ्यासेन करोति परोक्षोचिकीर्षन्निति वैतहव्यस्तोचैये शौचिवृक्षाः ॥ ४ ॥

अथायं सन्धिरन्तर्भागं भवतीह बहिर्भाग मिति बहिर्भाग मित्याहुः समाप्तेषु भागेष्वागच्छत्यथाप्यथा छन्दसा भवयति बहिर्भाग मिवैव स तत इत्यन्तर्भाग मित्यपरं का सा भक्तिर्या बहिर्भाग मितरायणिरन मुक्थैः सन्निमीते ऽन्तर्भाग मुक्थानि भवन्त्यन्तर्भागः सन् किंभागः स्यादिति गायत्र इत्याहुः समाप्तेषु भागेषु पुनरुपक्रमे कोऽन्यो गायत्रवान् स्यादिति सर्वभाग इत्याहुः सर्वभागं पृष्ठं ह्यत्र रथन्तर मित्यानुष्टुभ इत्यपरं रात्रानुबन्धतयेति क्रमे भवतीह समास इति क्रमे भवतीत्याहुः समस्तेऽक्षरे रात्रिपर्यायाः क्रमे सन्धिरित्यपि वा क्रमे रात्रिपर्यायाः समस्तेऽक्षरे सन्धिरिति नैतदिहविज्ञायत इति शाण्डिल्यायनो ऽमुत्र खल्वेतद्दशरात्रे विज्ञायत इदं पदस्य स्थान मिदं मध्यक्रमसेदं वृद्धेरिदं समासस्येति तत्रहि द्विर्भागाः प्रकल्पयन्त इति विज्ञायत एवेति

वाजाः पदस्थान्यहस्सवनानि क्रमे षोडशी त मप्यभिविहारए-शउसख्येत मेवाक्षरक्रम मनु विख्यापयिषन् वृद्धे। रात्रिपर्यायास्तानपाभ्यस्यत्यथाद्यात्यसामानो स्विछन्दोमा इति तदपुराभयोः सन्ध्योः सतोरेते मेव सन्धिरित्याचक्षते समासादित्येतेन सर्वैकाहेषु सामभागा व्याख्याताः ॥ ५ ॥

अथ दशरात्रे कथं भागा इति। यथाकामी भागाना मित्येक आङ्कुरस्यैवैकभाव्य मस्ति सर्वभाव्य मपि हि त्र्यहःश एव भागाः। खुर्गायत्रः प्रथमस्त्र्यहस्त्रैष्टुभो द्वितीयो जागतस्तृतीय आनुष्टुभः षोडश्यानुष्टुभं दशमं तदपोव मिव ब्राह्मणं भवति प्रातस्सवनेनैव प्रथमस्त्रिरात्रः कल्पते माध्यन्दिनेन सवनेन द्वितीयस्तृतीयसवनेन तृतीयो ऽग्निष्टोमेन साम्नैव दशम महरित्यथापरं गायत्रं त्रैष्टुभं जागत मिति प्रथमस्त्र्यह एव मेव द्वितीय एवं तृतीय आनुष्टुभः षोडश्यानुष्टुभं दशम मथापरं गायत्रं त्रैष्टु जागत मिति प्रथमस्त्र्यह आनुष्टुभो द्वितीयो गाय त्रैष्टुभं जागत मिति तृतीय आनुष्टुभः षोडश्यान् ष्टुभं दशम मथापरं गायत्रं त्रैष्टुभं जागत मानुष्टु मिति प्रथमश्चतुरह एव मेवछन्दोमचतुरहो वेहिभा

पञ्चमषष्ठे इत्यथापरं पदस्थः प्रथमस्त्वाहो ऽवरस्तो द्वितीयो वृद्धिस्तस्तृतीय आनुष्टुभः षोडश्यानुष्टुभं त्र्यशमं ते खलु भ्रमवन्नाश्चिनो भवाननु व्यूहन्ति जगती प्रातस्सवन मागमं तत्र जागतच्छन्दसा भव-यिष्याम इति न वय मनुव्यूहामः सवनभक्तिस्त्वान्ना एव भवेयु वा इत्यथ संवत्सरे चतुर्विंशं लुब्धभाग मिति गौचिवृचिर्गायत्रं वा स्तोमस्त्वावेण त्रैष्टुभं वा स्थानेन सर्वभागं वैकाह्यादित्यथाभिप्लवा ऐका-हिका वा स्तोमस्त्वावेण षाडहिका वा तन्त्रस्त्वावेण त्र्यहभागात्स्वरसाम्ना मानुष्टुभो विषुवाध्वस्त्वानुर्ष्या-त्सर्वभागो वैकाह्यादिति ॥ ६ ॥

अथाहीनेषु त्रिरात्राणां गायत्रं पूर्वं महस्त्विभाग मुत्तरं यथाग् ब्रह्मसामसतु त्रैष्टुभं ब्रह्मसामप्रभृति जागत मायोडशिनः षोडशिप्रभृति पर मानुष्टुभं त्रिरात्राणां गायत्रं प्रथम महर्जागतं द्वितीयं त्रैष्टुभं तृतीयं वैदत्रिरात्रे सर्वभागान्यहानि चतूरात्राणां गायत्रं त्रैष्टुभं जागत मिति त्र्यहो ऽवरात्ररे चतुर्थे मिति गौचिवृचिः समस्ते ऽन्तर इति गौतमः पञ्चरात्रे-ष्ववरावरयोरेव चतुर्थपञ्चमे इति गौचिवृचिः सम-स्तेऽवर इत्येव गौतमः षड्रात्रप्रभृतिषु दाशरात्रिका

भागा यावद्यावदभिप्राप्नुयुरथ यत्राहीन एकाहैर्वर्त्तेत सर्वभागास्तत्रैकाहाः स्युरित्येक आहीनिकभागा यथास्थान मित्यपर मेतेनाहीनेषूपधीयमाना व्याख्याता अथ यदूर्द्ध्वं दशरात्रादुपधीयेरन् ये वा मध्ये दशरात्रस्य भागपर्वणि सर्वभागा एव ते स्युरेतेन सत्रेषूपधीयमाना व्याख्याता अहीनैकाहसमासा ह्येव सत्राणि भवन्ति ॥ ७ ॥

अथ सुब्रह्मण्यायां विचारयन्त्यृग् खल्वयं भवती३ सामेत्यृग्भवतीत्याहुर्छन्दश्च ह्वास्य नामधेयꣳ सुब्रह्मण्येति सामेत्यपरं गीतꣳ हि भवत्यथाप्याहुर्मन्त्र एव खल्वयꣳ शिथिलो भवत्याह्वानार्थस्तस्येय मध्यायियꣳ स्यादित्यथाप्याहुर्नैवेय मृग् न साम सुब्रह्मैवेद मिति ब्रह्मणो भवती३ उद्गातुरिति ब्रह्मणो भवतीत्याङ्गदेतेन ह्ययं संयुज्यते ऽथापि ब्रह्मा सुब्रह्मण्य इति नामधेयसारूप्याद्थाप्येवꣳ सर्वाहोरात्रा वषट्कारिण्यो भवन्त्युद्गातुर्ह्याग्नीध्रः सम्पद्यत इत्युद्गातुरित्यपरं गीतकारी ह भवति स यदभवेभ्यः पुरास्य भवेभ्यः कर्म प्रवृज्यत इत्यथैतानागतत्वात्कालादहीनेषु सत्रेषु याजमानान्नामग्राहः किमर्थं इत्युच्चावचचरणास्त्वियो भवन्ति स इह देवसाव्ये च मनुष्यसाव्ये च येषां

पुत्रो भविष्यामि याएश्च पुत्रान्वच्ये ते मे पुत्रा भविष्यन्तीति शाकटी मन्ववरुन्धाह्वयेद्राह्नो ऽप्रत्यारोहायाप्रत्यारोहाय ॥ ८ ॥

अथातो दशरात्रस्य ब्राह्मणेनैव द्रव्यसमुद्देश उक्तो यानि चैतानि ज्यौतिष्टोमानि द्रव्याणि यानि च पृष्ठैः समानरूपाणि यानि च दशरात्रेण समानसङ्ख्यानि यथैतत्प्रथमानि प्रथमद्वितीयानि द्वितीय इति स्थानतोऽपि समानएं द्रव्यएं सम्पश्येदथैताः सप्त नाम विभक्तयः स तं तेन तस्मै तस्मात् तस्य तस्मिन्नित्यामन्त्रिता ऽष्टमी स खलु विभक्ति मामन्त्रितां प्रथमेऽहनि करोति कस्य हेतोरिति प्रत्यक्षभक्ति रथन्तर मामन्त्रितस्य न परोक्ष मस्तीत्यथाप्येषा प्रथमाग्निमन्थनीया भवति तां चतुर्थे ऽहनि करिष्यन् भवति त मिति द्वितीया तां द्वितीये तेनेति तृतीया तां तृतीये तस्मा इति चतुर्थी तस्या न द्रव्यं विद्यमान माङ्गिरेका मुदाहरन्ति प्रतवासौ नवासौ धीति मत्नय इति सैषा प्रतवती भवति भागान्ते ऽपरूपा स इति प्रथमा तां चतुर्थेऽहनि करोति कस्य हेतोरिति प्रत्यय एष भागानां प्रत्यय एषा विभक्तीनां प्रत्यये प्रत्यय मथापि नामधान्येषा भवत्येतस्मि-

न्नहन्यग्निं जनयन्तिं जातवो नाम धीयत इति तस्य ब्राह्मणं भवति देवा वै श्रिय मैच्छंस्तान्न प्रथमेऽहन्य-विन्दन्न द्वितीये न तृतीये तां चतुर्थेऽहन्यविन्दन्नित्येतां श्रिय माह नामधेयं ह विभक्तयः श्रिता भवन्तीत्यथा-प्येषा द्विसंशया पञ्चमे ऽहनि भवति तथेति वा तस्मादिति भवतीति गौतमस्तान् शश्वदेके चतुर्थी ब्रुवते तां ततो नामधान्या प्रच्युता मन्यतरस्मिन्नहन्य-नुगृह्णाति तदप्येव मिव ब्राह्मणं भवति तेनो श्रीः प्रत्युपोदितेति (नैव*) ब्रह्मणं आज्ये निरुच्यत इन्द्रा-त्परि तन्वं मम इति तस्मादिति तथेति भवतीति धानञ्चय्यः सा षष्ठी ता सामन्त्रितया प्रच्युता मिहा-नुगृह्णात्यथापीतयोः पूर्वयोस्तृतीयया समानं द्विव-चनं स तथैव ते ऽपाप्ते चमसस्तापि वा प्रत्यवरोहार्थं एवाकरिष्यत्समूढाज्ये निरुच्यते ऽग्ने सोमं मनामहे सिद्धमद्य दिवि स्पृशो देवस्य द्रविणस्यव इत्यभविष्य-दित्यथापि व्यूढाज्य एव भवति तव श्रियो वर्ष्यस्येव विद्युत इति ज्वक्ष्यित इत्यभविष्यदित्यामन्त्रितैव षष्ठे भवत्येवमाद्यवसानसमाधिरिति ॥ ६ ॥

अथैषा स्वरविभक्तिरौशनं प्रथमे वासिष्ठं

• नैवेति पदं ख-पुस्तके ।

द्वितीय उभयतःस्तोभं गौतमं तृतीय आभीशवं चतुर्थे आनूपं पञ्चम इहवद्वामदेव्यं षष्ठे ऽथैषा निधनविभक्तिनौधसं प्रथमे श्यैतं द्वितीये महावैष्टम्भं तृतीय आथर्वणं चतुर्थे बार्हद्गिरं पञ्चमे गोषः षष्ठेऽपैग्रपैड़ाविभक्तिः कालेयं प्रथमे माधुच्छन्दसं द्वितीये रौरवं तृतीये पृश्नि चतुर्थे रायोवाजीयं पञ्चमे गोष्ठ एव षष्ठे ऽथैषा छन्दोमेष्विडाविभक्तिर्जरावोधीयं सप्तम इडानां सञ्चारो ऽष्टमस्य सतो नवमे ऽहनि क्रियते प्रतीचीनेडकाशीतं नवम उरसेधो दशमे ऽथ नौधसे बद्दतीन्द्रश्नीभिर्हवामह इति तत्खलु हवामह इत्येव कर्त्तव्यं विधिप्रमाणाः कथ मयथाविधि कुर्यामेत्याम्नायदैतेन ब्राह्मण मुपवर्णयतीत्यपरं तन्नियोगाय न प्रभवतीत्येतेनैतद्व्याख्यात मक्षान्तसमुद्रः परमे विधर्मन्निति यानि चैवञ्जातीयान्यथाचारे वदति यः पुरा पुण्यो भूत्वा पश्चात् पापीयान्स्यादाचारं ब्रह्मसाम कुर्वीतेति किं तस्य स्थाने स्यादित्येते एवान्योन्यस्य* स्थानं व्यतिहरेन्नौधस मुष्णिहि कुर्यादिति तदाहुर्व्यतिहरति चेदत्र बृहत्योडशिसाम स्याद्गौरीवितं नूनं द्वितीयस्याह्नः पृष्ठं कुर्यादित्यथ वै सञ्चारये-

* "स्यादित्येते वाप्योन्यस्य"—इति ख।

दिति * सञ्चारयति चेद्गौरीवित मेवानुष्टुभि कुर्याद्गौरीवितं षोडशिसामेत्यथ वै प्रतिनिदध्यादिति प्रतिनिदधाति चेद्यत्र बृहत्षोडशिसाम स्यात् किं तत्र बृहत्स्यदथं द्वितीयस्याह्नः पृष्ठं कुर्यादित्यथ कथं स्यादिति सञ्चारयेदहर्नानाहास्तु यानि सञ्चारिधर्माणि स्युः प्रतिनिदध्यात् समानेऽहनि व्यतिहरेद्यत्र व्यतिहार मभिरूपं मन्येत प्रतिनिधिस्त्विहाभिरूपतरः पौष्कल मुष्णिहि कुर्यादेतच्च ज्यौतिष्टोमानां द्वयानां दशरात्रे ऽनिहितं भवत्यपि च यदनिधनं राथन्तरे ऽहनीति यज्ञायज्ञीय मग्निष्टोमसाम यज्ञे यज्ञे कुरुतेति तदेवाभिवदत्यथापेरत्र तृतीयसवनं सामान्तस्त मदिदर्शयिषीत् ॥ १० ॥

अथ वैरूपे वदति यथा मण्डूक आट् करोत्येवं निधन मुपयन्तीति कस्येदं ब्राह्मणं स्यादिति हुता राथन्तरीडाहुता बार्हतीति कौत्सस्तदिद मकृतकारं ब्राह्मण मर्द्धडाब्राह्मणं स्यादिति पञ्चमेडेयं प्रत्याहृता भवतीति गौतमस्तां परोक्षीकृत्याभिव्याहरेयु रेवं पञ्चमेऽहन्ययातयामा भवतीति तदपेत्र मिव ब्राह्मणं भवत्ययातयामताया इति तत्र

* "सञ्चारयीति" ख।

कः परोक्षीभाव इत्याकारटकारौ वा कुर्युरिकारणकारौ वैव मेकवर्णविकार इकारन्त्वेनायिकारीकुर्युरेतस्मिन् परोक्षीभाव उपलभ्यत इति यद्दैवतं व्यत्यस्यति वैरूपे विरूप मचिकीर्षद्वर मेवेद महः सत्पर मभ्यस्तं भवतीत्यपरं वाभ्यासे वात्यासं करिष्यामीति स्तोत्रवशेनेति धानञ्जय्यो यद्वात्यस्यन् यद्दैवतं पदा यत् प्रतिहारयिष्यदितिप्रत्यवेतस्तथा प्रतिहारोऽभविष्यद्यद्यु वै देवतायै बहिर्ष्टेवं प्रतिहारोऽभविष्यदथैत्य मनतिप्रत्याहृतोऽन्तस्थं भवतीत्यथाप्यथैतं छान्दस मध्यायं विद्यमान माहुरप्यथ खल्वाह द्वादश वैरूपाणि भवन्तीति कस्येदं ब्राह्मणं स्यादिति संवत्सरब्राह्मण मित्याहुः संवत्सरे द्वादशकृत्वो होतृषाम भवति तस्येदं संवत्सराग्निं वदेदिति ॥११॥

अथ प्रमंहिष्ठीये वदति हिंसितोऽन्वीचेत य मिच्छेत्प्रसज्यमानं (न *) प्रत्येयादिति त मनुगायेद्दिचिषा मग्निवति कुञ्च सर्वा सकथ्युदृह्याशयं न प्रत्येयादिति काकुभ उक्थः प्रणयः पृष्ठच्छन्दोऽन्वभिवृद्धि रथ स्वःपृष्ठस्याङ्गिरसस्य निधनयोरानुपूर्व्यं विवदन्ते स्वःपूर्वं मिडोत्तरेत्येके एव मेतयोः

---

* ख पुस्तके एतत् पद नास्ति।

सामान्तरयोरानुपूर्व्यं भवतोऽन्यं वयं पूर्वं कूर्म एव मनयोः समानोपायादभिव्याहारं पश्यामो यथा राजने माधुच्छन्दस इत्यथ वैराजं चानुतोद मेके कूर्वन्त्येवं छान्दसोऽध्याय इति चतुरनुतोदं वय मेव माचार्यवच इति तेन वात्समट समादध्यायदीदं चानुतोदं तद्यदि चतुरनुतोदं तदपेव सिवब्राह्मणं भवत्येतस्मिन् वैराजं प्रतिष्ठित मित्यथ कतमे विष्टम्भा इति देवता इत्याहुर्देवताभिः पदानि विष्टम्भानीति तदाङ्क रेकादशेमा देवता दशक्षरवो विष्टम्भातीति दशैताः सत्यम्राया भवन्त्यपि वा य एते देवतान्तरेषु दशस्तोभास्तान् विष्टम्भानवोचत्तैर्देवताविष्टब्धा इत्यथैतयोरक्षरयोर्विभवत्त ऋगक्षरे स्तोभाक्षरे इत्यृगक्षरे इति लामकायनस्तदभिव्याहारेण जानीमो यादृशे इमे ऋगक्षरे तादृशे इमे भवत इत्यथापरादित्यसदृशं वैराजं यादृश इत आदित्यस्तादृशः परस्तात्तद्रूपं दिदर्शयिषन् प्रथमे ऋगक्षरे अन्त परिहरत्यथापुनावचाः सामवृत्तयो भवन्ति यथैकवत्साभ्युपेतानि पुनरारब्धानीति नान्यां मन्येत स्तोभाक्षर इति धानञ्जय्यः पश्यामः खलु पदानुरूपान्स्तोभान्नृचो- व्यवयन्तो यथैतज्जनदत्या मृचि जनद्दान्स्तोभो

ऽप्रसिद्धवतोऽपि राद्धोद्गोर्ध्वव मिमे पीतवत्या सृचि पीतवतो स्तोभाक्षरे भवत इत्यथापराद्दिरयसदृशं वैराजं यादृश इत आदित्यस्तादृशः परस्तात्तद्रूपं दिदर्शयिषन्यदानुरूपे स्तोभाक्षरे अन्तं परिहरति नो एतत् क्वचन पश्यामः प्रथमे जगत्यरे अन्तं परिक्रियमाणे इत्यथैषातिजगती भावप्रत्यये छन्दस्तोमरोह मद्दिदर्शयिषोद्विराजं वा वैराजे ऽहन्यचिकीर्षोद्विराडियं पञ्चाशदक्षरा बृहत्यायुत्तरे तेन बृहतीभ्यो ऽनपेतं भवतीरयनपेतम्भवतीति ॥ १२ ॥

अथैतासु महानाम्नीषु विप्रतिपादयन्तो दशाक्षर मिद मशाक्कुर मित्यशाक्करी प्रथमा द्विपदा शाक्कराणि त्रीणि पञ्चाणि पदानि धातुरशाक्करः पञ्चाक्षरः स एष कृताकृतो भवति वत्सो शाक्करो ऽष्टाक्षर ऊधः शाक्कर मष्टाक्षर मभ्यासवत्तश्च दाक्षरान् पादादीन् मतीतोदा इत्याचक्षते पुरुषो शाक्करः पञ्चाक्षरः शाक्कराण्येव त्रीणि पदान्यभ्यासो शाक्करोऽष्टाक्षरस्तश्च प्रस्तावयति न प्रतिहारयत्येते नैत्रोत्तरयोः शाक्कराणि चाशाक्कराणि च व्याख्यातानि हाभ्यासोत्तमा शाक्करो भवत्यभ्यासा किमर्था इति लोकोक्ताः शक्कर्यः साभ्यासा इमे लोका भवन्त्वग्निर्वायुरिति पूर्वयो-

रादित्यश्चन्द्रमा इत्युत्तमस्य तस्माद् द्वाध्यासोत्तमा शक्वरी भवत्यथ खल्वाह व्यौपशाः सऽ्स्तुता भवतीति कस्येदं ब्राह्मणऽ् स्यादित्युत्तमाया द्वाध्यासाया इत्याहुरेकाध्यासे पूर्वं द्वाध्यासोत्तमा तस्या इद मभिनन्द्यं ब्राह्मणं वदेदित्यपि वा समस्तब्राह्मण मेव स्याद् व्यौपशोऽस्मैत्यूधसोऽध्यासब्राह्मणं मन्य इति वार्षगण्य एव मेव ब्राह्मणं भवतीडे अमितो ऽयकारं तस्माच्छ्रेष्ठे सोऽध्यीयसी स्तूयादिरयुपशोक्तानि शृङ्गाणि भवन्त्यथ खल्वाह दिशः पञ्चपदा दाधारर्त्तुं षट्पदा छन्दाऽसि सप्तपदा पुरुष द्विपदेति प्रतिलोमं वदति॰ वास्तश्छिद्रोहो भविष्यतीति सप्तपदा प्रथमा शक्वरी षट्पदा द्वितीया यद्धि प्रथमाया उत्तम पदं तद् द्वितीयायाः प्रथमं प्रगाथः सानुपृष्ठ मिति पञ्चपदोत्तमा यद् द्वितीयाया उत्तमं तत् तृतीयायाः प्रथमं च द्वितीयं च नवपदाः पुरा बभूवुरिति लामकायनस्ताभ्यो रेवत्यो निर्मिता द्वे प्रथमायाः पदे त्रीणि द्वितीयायाश्चत्वारि तृतीयायास्तद्यथेव मेव ब्राह्मणं भवति सिमाभ्यो ह्यधि रेवत्यः प्रजायन्त इति नवपदा एव भविष्यन्तीत्यूधश्चाभ्यस पदं चानु-

॰ 'भवति'-इति च।

सएहरत्यथापि नवपदा एताभिरूपतरा न विपर्याये न्निगव इति ॥ १३ ॥

॥ इति निदानसूत्रे तृतीयः प्रपाठकः ॥

---

॥ अथ चतुर्थः प्रपाठकः ॥

अथ खल्वाह गायत्र मयनं भवति त्रैष्टुभ मयनं भवति जागत मयनं भवतीति किमयनए स्यादित्यूधसि विकारो दृष्ट इति गौतमधानञ्जप्यौ य एष मध्य ऊधसो ऽथकारस्तए स्विति कुर्यात्तद्गायत्र मयन मयेति त्रैष्टुभ मिडेति जागतं तदाहुर्विकृतो ऽथकारो ऽविकृतस्य को विकारो ये चाभित इडेति विकुर्यादिति सर्व मेवोधर्विकारार्थं सागच्छतीत्यपरए सर्व मेवोधर्विकुर्यादित्यथाप्याहुरविकृत मेवोधः स्या दन्त्येडा मेव कुर्यादन्यासवानि कर्माणीत्यथापराहुरविकृतेशान्त्येडा स्यादेव मागन्त्येडायास्तद्विकुर्यात्तद्धायनं भवतीति से कथ्यहेतोर्जागत मयनए समारसान्नेति नेदं जागत मिति शाण्डिल्यायनो यानि

त्वत्र निधनानि तानि स्वरिति कुर्यात्तद्वायत्र मयन मपोति त्रैष्टुभ मिडेति जागत मपोद्दं मिथ्यणिधनं सर्वाभिमायं यथेद मधीमह इत्यूर्द्धं शक्वरीभ्यः पञ्च पुरीषपदानि पञ्चाक्षराणि तेभ्यः प्रस्तावयति न प्रतिहारयति न शश्वदेकेऽध्यासपुरीषपदानां प्रस्तावयन्ति प्रतिहारोपायान् प्रस्तावोपेयादिति प्रस्तावयामो वय मन्यदिदं शक्वरीभ्यस्तत्कथ मप्रस्तुत क्रियतेति संरोधात्तु नून प्रतिहारोपेशात्ते खल्विमे वहवः प्रस्तावाः कथ मोङ्कार इति प्रस्तावनिमित्त ओङ्कार इत्येके प्रस्तावे प्रस्ताव ओङ्कारेणादद्दीतायापराह रसो वा एष साम्नां यदोङ्कारो नैतेनातिरेको ऽस्तीति प्रथम एवप्रस्ताव इत्यपरः स्तोत्रीयाया एतान्यङ्गानि भवन्ति सकृत्तु खलु स्तोत्रीयाया ओङ्कारो भवत्यथापि परिचष्ट ऊर्द्धं प्रतिहारादोङ्कारेणादान मथाग्नेव मन्यैः सामभिः समाधिरिति ॥ १ ॥

ते खलु शश्वदेके पुरीषपदैः प्रतिपद्यन्ते पञ्चविधेन पञ्चमस्याङ्गः पृष्ठं प्रतिपत्स्यामह इत्यथापेरवं शक्वर्यवसानं स्तोत्रं भविष्यतीत्यथापराह गोष्ठः पुरीष मिति कृत्वा वै गोष्ठं पशूनुपाकुर्वन्त्यमानो वयं कुर्म एवं च छान्दसो ऽध्यायोऽपि चैवंपञ्च-

विधं पञ्चसप्ताहाः पृष्ठ मनुसꣳस्थाप्यत इति यद्दे-
तद्गोष्ठः पुरीष मितीष्टा वै पशून् गोष्ठं कुर्वन्त्यथापि
पश्चार्द्धसेवि पुरीष मिति तत् खलु सर्वाभिः सह
स्यादित्याहुस्तृचदृष्टय इमा भवन्ति लोकदृष्टयस्तदि-
द मन्त्रे ऽनुषङ्गस्थाने समाम्नातं भवत्यथाप्येवं सर्वाः
सपुरीषा भविष्यन्तीति व्यवायश्चाभविष्यदितिगुरु चाथ
वै विष्टावान्तेषु विष्टावसमाधय इति व्यवायश्चैव
गुरु चाथ वै पर्यायान्तेषु पर्यायसमाधय इति व्यवाय-
श्चैव गुरु चाथ वा उत्तमा मेवानुचरेदेतया हि
सहोत्पन्नं भवतीति व्यवायश्चैव गुरु च सकृदन्ततः
स्यादित्याहुरेतच्चासां लघिष्ठ मपि चैव मव्यवायो-
ऽथापि परिनिष्ठायाशिष मुद्दिश्यान्वे ऽनुष्टां वदि-
ष्याम इत्यथापि पश्चार्द्धसेवि पुरीष मिति तासां धर्मो
नियुज्यते न व्याहरेन्नाश्नीयादभिनद्याच्चासीत पूर्वे
कोऽयं ब्रह्मणो भवति तन्नो ह प्रतिलभ्य प्रब्रूहीदेत
मेवाहं ब्रह्मचर्यधर्मं मन्य इति गौतमस्तत्तृतिगुरु
श्चाभविष्यदपि च नो ह मरणाशङ्का मिमस्तु सर्वच्छ-
न्दसा भवन्त्वासां मे चरतः सर्वच्छन्दसा मिव व्रतं
चरितं भविष्यतीत्यथाप्याहुर्यानि रूपाणि ब्रह्मचारी
न पश्यति तान्यासन्नाश्नाति लब्ध्वा हैनांत्समावर्त्य

भवति त मेतद्रूपेभ्यश्च रसेभ्यश्च समवृत्तमन्यत इति ॥ २ ॥

तासां खलु त्रीन्संवत्सरान् ब्रह्मचर्यं चरेत् कृष्णवस्त्रः कृष्णभक्ष आचार्याधीनस्तपस्वी तिष्ठेद्दिवाऽऽसीत नक्तं सायं प्रातरुदकोपस्पर्शी सर्वभूतेभ्यः पन्थान मदद्दर्शति शरणं नातीयान्नित्यं स्निग्धवासा बुभूषेदुदकसाधवो हि महानाम्न्य इत्येवं खलु चरतः कामवर्षी पर्जन्यो भवत्युदकोपस्पर्शनं किमर्थं मित्यनुक्ताः शक्वर्यस्ता एव प्रविशन्मन्यत इत्यपि वा पशूना मेव पायनार्थं स्यात् पशूक्ताः शक्वर्य इति खलु प्रथमां स्तोत्रीया मनुगायाहोरात्रे वाग्यतः परिगृह्याच आसित्वा तस्याः संवत्सरं ब्रह्मचर्यं चरेदेव मेव द्वितीयाया एवं तृतीयायास्ते खलु शश्वदेकं प्रथमत एव परिगृह्यन्ति प्रथमत एव यथा न प्रवक्ष्यतीत्यध्यासं प्रत्येकेऽध्यासं प्रत्यध्यसिष्यामह इति तं प्रातरभिवीक्षयन्ति यान्यप्रवक्ष्यं मन्यन्ते योऽग्निं वत्स मादित्य मपोऽभिव्यख्य मित्यपोज्योतिर भिव्यख्य मित्यग्निं पशूनभिव्यख्य मिति वत्सं स्वरभिव्यख्य मित्यादित्य मथाप्येतद्दिवैवैता भवन्त्याप इवाग्निरिव वत्स इवादित्य इवेत्यथ खल्वाह पार्थुरश्मं राज-

न्याय ब्रह्मसाम कुर्याद् बार्हद्गिरं ब्राह्मणाय रायोवाजीयं वैश्यायेति पार्थुरश्मं चेद् ब्रह्मसाम स्याद्बार्हद्गिरस्यैवर्क्षु कुर्याद्यद्यु वै रायोवाजीय मेते एव बार्हद्गिर रायोवाजीये सत्तोत्रीये अन्योन्यस्य स्थानं व्यतिहरेत् कथ मुभयेषु समवयत्स्विति भुम्नो वर्णं नयेद्गृहपतेरित्येकेऽपि वा बार्हद्गिर मेव कुर्यान्नित्यञ्च श्रैष्ठवर्णीयं चेति वैश्वामित्रस्तोत्रीये षोडशिना स्तूयमान आष्टमिक मुक्थस्तोत्रीयं प्रति निदध्यात्सप्ताराय वीङ्कस्तोत्रीये वसिष्ठस्यप्रिय मनुकल्पयेद् वसिष्ठस्यप्रिय मनुकल्पयेत् ॥ ३ ॥

अथ षष्ठेऽहनि रेवतीषु वारवन्तीयं पृष्ठं भवति तदेके प्रत्यर्चं ब्रुवत एतत्प्रकृती ह्यं भवतीत्यथापि यद्रैवत्यः पृष्ठ मभविष्यत्पवमान आसां धर्म मकरिष्यन्नित्यथाप्यानुरूपाग्निष्टोमसाम्नि वारवन्तीयस्यैवानुरूपं कल्पयतीति रेवत्य इत्यौद्गात्री रेवती पष्ठानाऽ दृष्टिब्राह्मणं भवति तासां धर्मी नियुज्यते तद्वयां घोषोऽन्वसृज्यतेत्यथापि प्रतिपद्भिः पृष्ठानि संवर्णयन् रेवतीरेवाभि संवर्णयति षष्ठं च विश्वजिति चाथापि पृष्ठस्तोमात् पृष्ठानि च्यावयन् रेवतीरपि च्यावयन्त्यथाप्यनुगृह्णीतपृष्ठे रेवतीरेवानुगृह्णातीत्य-

घापि परोक्षपृष्ठोपाह्वपृष्ठयोरनुगृहीतपरोक्ष इति वार-वन्तीय मेवानुगृह्णाति यदेतदेतत्प्रकृतौ दृष्टं भव-तीति ब्राह्मणेनैव कारणं वदति यदेतत्प्रवमान आसां धर्मं मकरिष्यन्निष्यपाम् पृष्ठत्वथ् रतोनी-येन मन्यते यदेतदारवन्तीयस्यैवानुरूपं बाल्पयती-त्युक्तं वारवन्तीयस्य परोक्षं तदेतद्भवतीपरोक्ष मेव भवतीति ॥ ४ ॥

अथ खल्वाह प्रायणतो द्विपदाः कार्या३ उदय-नतो३ इति कथं प्रायणतः स्युरिति प्रथमेऽहनीत्याङ्ग-रेतद्धि प्रायणं भवत्यथापि दृश्यते प्रायणीयस्योक्थत्वं चतुर्विंशस्य तथा पष्ठस्याऽग्निष्टोम्यं यथाभिप्लविक द्वितीय इत्यपर मेतदूक्थ्यानां प्रायणं भवत्यथापेव मुक्थ्यतिहारः सिध्यत्यथापेवं प्रकृतिसविधतरं भवतीति कतमावृत्ते पृष्ठ्य सध्स्थाधर्मा इत्यावृत्स-स्थापान्त एव स्युरित्येके यदा षडहः सन्तिष्ठत इति हि भवतीत्यथापि षडहधर्मा इत्याचक्षते न चैतत षष्ठस्य साधियो यथो च प्रथमस्य त्रयस्त्रिंशस्य त्वेव संस्थाया मिताचार्या एतदावृत्ते रूपं य इत उपक्रम धर्मः स परस्तात्सध्स्थाधर्मो यः परस्तात्सध्स्थाधर्मः स इत उपक्रमधर्म इत्यथापि स एतानावृत्तसान्तं

परिहरेत्सर्वांस्त्वेव नूनꣳ सोऽन्वलचयान्यावृत्तश्चान्तं परिहरेदिति ॥ ५ ॥

त्रीणि दशरात्रस्य विच्छिन्नानीति शाण्डिल्यः प्रत्नम मभितो हि षष्ठे पूर्वमेकं * तेषाꣳ सन्तानाय सन्तनीत्यनुपूर्वꣳ सूक्तानुरूपाꣳश्छन्दोमान् करोति पृष्ठश्छन्दोमाना मकृतकारायाथापप्रकृतवादः प्राक्-सूक्तानुरूपयतेत्यथापि प्रज्ञापयति सꣳस्तावेषु प्रजा-स्थान मभ्यवर्द्धयिषीद् बृहद्रथन्तरे पृष्ठे न हि षाडहि-कान्यनुभवन्ति नो व्युत्क्षुसीदथापि शिथिलोक्तास्तेषां प्रत्यक्षाभ्यां पृष्ठाभ्यां दृढीभावो भविष्यतीत्यथापि सम ढक्तास्ते एते ज्योतिषी साम्नाꣳ स वाच हेतोर्बृहत्पूर्वं ,युक्त इति क्रतयोः क्रियमाणयोरेपाकृतकृतिरथापि स्तोमप्रत्यवाये पृष्ठतो रोह मदिदर्शयिषीद्यवोक्तं बृह-दित्ययापीदं वृतस्थानं बृहदाश्रितया व्रतस्य मानस-तया ते व्यत्यासमयुंक्ते तरकुशलं वाङ्विधनानि माध्य-न्दिनान्यन्यान्यैडान्याभवान्यानि सवनच्छन्दसो रनुग्रहाय ॥ ६ ॥

स्वर्कपृष्ठान्यैह्निनो ऽधीयते सैषा छन्दोमानां पृष्ठभक्तिस्तेषां पृष्ठत्वे तिष्ठमानो न साक्षात् करोति

---

* "षष्ठाहं मेकं"—इति क।

बृहद्रथन्तरे वा निकामयमानः पूर्वां चार्भवे करोत्येवं नेदीयसि पृष्ठानाᳬ सप्तमे ऽहनि कृताकृतौ भवत्यब्राह्मणविहितत्वाकर्त्तव्य इत्याचार्यश्छन्दोमानां चार्कसमाधिर्यथा चेतान्यैङ्गिनो ऽधीयते छन्दोगाश्चापेत्न मेके ऽधीयते ऽपि सᳬणेधे ऽनुख्याते यथा त्रिवृति दशरात्र इति नवमे ऽहनि इमे स्तोमे सति साध्यासां बृहतीं करोति कस्य हेतोरिति साध्यासा पूर्वे ऽहनि कृता स एव ममत्ययवायो ऽपि वह्निषं चरति तस्याः पश्यता मापिपादयिषीहावचानिकाणां द्रव्याणां पश्याख्या ऽप्यैतस्या मेवैतᳬ सामयोगᳬ साधीयोभ्यशुत इति नैककुभस्य निधने विवदन्ते पदनिधनाना मित्येके याद्दशे इमे त्वगचरे ताद्दशे, इमे भवत इति वह्निर्णिधन मित्यपरं वह्निर्णिधनस्थाने च युज्यते ऽपि चास्य निधनवादो भवति वह्निर्णिधनाना मुत निधनवादा भवन्तीत्यथाप्यापद्यते ज्योतिर्विचारान्यत्पदनिधन मभविष्यद्युत् परेस्यत ज्योतिष्टोमीं मात्रां नास्य प्रतिनिष्कारं कल्पयति वह्निर्णिधनस्यैव सत इति सत इति ॥ ७ ॥

अथ दशमे ऽहनि चतुर्ऋचᳬ होतुराज्यᳬ समामनामस्तस्य मध्यमे भवतस्तानूनपातौ च नाराशᳬसी

च द्वयानि कुलानि भवन्ति तानूनपातन्तानूनपातेषु कुर्यान्नाराशꣳसीं नाराशꣳसेषु वसिष्ठशुनका अत्रयश्च वध्र्यश्वाश्वकण्वाश्च सङ्कृतयश्चैतानि नाराशꣳसान्यथेतराणि तानूनपातानीति कथ मुभयेषु समवयन्तिष्वति भूम्नो वशं नयेद्गृहपतेरित्येके ऽपि वा तानूनपाती मेव कुर्यादेषा भूयिष्ठानां कुलानां भवत्यपि चैता मेवैके ऽधीयते ऽथाप्येषा समारब्धतरा भवतीत्यथ मानसं दशमस्य भवती३ सर्वस्मादेव दशरात्रस्येति दशमस्येत्याहुर्नैतद्दशमेनाह्ना * विप्रयुज्यमानं पश्यामो ऽथापि दशमधर्मा हूयाचक्षते ऽथापि साद्ध मानसेन विराट् सम्पत्तिसङ्ख्ययाप्याहुः सर्व मेवेद मह: पुरा मानसं बभूव तदतिगुर्विति वाचꣳ समापादयाञ्चक्रुरेकस्तोत्रं वित्तं भर्म मनु प्रभुयन्त्स्यामतीत्यथापि वाग्युक्त मह: संयुक्त मह: संयुक्ते वाङ्मनसे भवत इति न दशमस्येत्यपर मुपरिष्टात् पत्नीसंयाजानां भवति यन्नूनं दशमस्याभविष्यत् पुरस्तात्पत्नीसंयाजाना मभविष्यदित्यथाप्यत्र त्रिक स्तोमः कथं त्रयस्त्रिꣳशं कृत्वा समाने ऽहनि त्रिकं पर्यवयिष्यदित्यथाप्यत्र गायत्रं छन्दः कथं त्रयस्त्रिꣳ-

* "मैव दशमनाह्ना"—इति घ।

शदत्तराः क्षत्वा समाने ऽहनि गायत्रं पर्यवयिष्य-
दित्यथापि वागुक्ता महरन्त्या वाग्भवत्यन्यस्तनो नास्य
भूयाद्दशमेनाह्ना सम्बन्धो यथा प्रथमेनेति कापटवः
सर्वं वैतद् दशरात्रस्य सर्वो वैतस्य दशरात्र इति
शाण्डिल्यायन आयामवाचं दशक्षमं मनोऽप्याम-
वामसंयुक्ते वाङ्मनसे भवत इति ॥ ८ ॥

तत्र गायत्रीः करोति स्थानं गायत्रीणां यदि
परस्याह्नो गुर्वैवेदᳬ स्तोत्रं तत्र लघिष्ठं छन्दो चिकी-
र्षीतायापेऽवमाद्यवसानसमाधिः प्रतिष्ठार्थो वाव
गायत्रीः करोतीति तासु विवदन्त ऐन्द्र्यः प्राजा-
पत्याः सार्पराज्ञ्यश्चान्द्रमस्यः सौर्य इति शाकपूणि-
स्तथा धानञ्जय्यः प्रत्यय आदित्यः प्रत्ययो मनः
प्रत्यये प्रत्ययं तत्र गायत्रं करोति स्थानं गायत्रस्य
यदि परस्याह्नो गुर्वैवेदᳬ स्तोत्रं तत्र लघिष्ठᳬ सामा-
चिकीर्षेदथापेऽवमाद्यवसानसमाधिप्रतिष्ठार्थो वाव
गायत्रं करोतीति यद्गायत्रीय-गौरीविति-रथन्तर-
वामदेव्यान्येवंयुतानि सामव्यूह इत्याचक्षते ऽथै-
तस्मिन् ब्रह्मोद्ये वदति भूयांसीव ह स्म शाण्डिल्यः
प्रदिशति यदादोऽप्रवन्निराचे ब्रह्मोद्यं तदाप्रत्ययिष्य-
द्यथा वैतद् ब्राह्मणा अधिमन्त्रᳬ समुदाहरन्तीति

वरण मन भवत्यन्तनिर्वचना आशिष इति वृत्वा वरानौदुम्बरीं समभिपद्यन्ते सर्वक्लृप्तिं कृत्वा निरुरिता इव मन्यन्ते ऽत आत्मान मूर्जा प्रत्याप्याययन्तो मन्यन्त ऊर्गुदुम्बर इति समाप्ते छन्दोव्यूहे सामव्यूहं कुरुत इति गौतमो ऽकृतकारार्थस्त्रयस्त्रिंशमग्निष्टोमसाम करोत्युपवर्हिता छन्दोमानां नावसाने ऽचिकीर्षेद्यापि शिथिलोक्ताः मतिष्टोक्तश्च त्रयस्त्रिंशस्त मवसाने ऽचिकीर्षेद्यापि त्रयस्त्रिंशे क्रियमाणे त्रिके सार्धराक्ते त्रिंशतः स्तोत्रीयं दशम मह: सम्पद्यते सा विराड्यापीत्वं द्वादश पञ्चविंशानह: सम्पद्यते नाहीनं साद्यादवार्षं सम्पदा चिरेन सुपासामीत्यितद्वयं शाण्डिल्यम् ॥ ८ ॥

पञ्चदशस्तोत्राज्ज्योतिष्टोमात्षोडशिकां ससन्धिकां रात्रिं ब्रूहीति चतुर्विंशति माज्यस्य आदत्ते द्वे वामदेव्यात्ततः साकमश्वात्ते दश गायत्रास्तृचास्तान् रात्रे स्थाने निदध्यात्ततः ककुभः सौभरास्तासां द्वितीयायास्तृतीयायाश्चतुरक्षरं चतुरक्षर मुद्धृत्य द्वे प्रथमाया मुपदध्या देवं स विराट्प्रथमो गायत्रास्तरो वैतद्व्य स्तोत्रीयो ऽतिशिष्टानीतरस्यां ककुभ्युपदध्यात्तां षोडशिनः स्थाने निदध्यात्त-

तसो नार्मेधान्तिसश्चोष्णिह एकां चानुष्टुभं ताए षोडशिनः स्थाने निदध्यादिति शिष्टास्तिस्रः कौत्सश्च द्वे बृहत्यौ नौधसात्तथा कालेयात्तासा मेका षोडशिनः स्थाने निदध्यादाताः सर्वाश्चतुस्त्रिएशदक्षराः सम्पद्यन्ते ऽन्तस्थान् प्रतिशिष्टास्तिस्रः सन्धेः स्थाने निदध्याद् द्वे ककुभौ रथन्तरायतस्रो यज्ञायज्ञीयास्तासां द्वे द्वे सन्धिस्तोत्रीयेषूपदध्यादेव मेताए सषोडशिकाए ससन्धिकाए रात्रिं निर्मिमीते ॥१०॥

ततः पृष्ठं ब्रूहीति सवनेभ्यः पूर्वस्त्राहः षोडशिनश्चतुर्थए रात्रेः पञ्चमए सन्धेः षष्ठं पृष्ठाग्च्छन्दोमानं ब्रूहीति त्रिवृत्पञ्चदशयोः समासश्चतुर्विंएशस्तत् सप्तमए सप्तदशत्रिणवयोश्चतुश्चत्वारिएशस्तदष्टम मेकविंएशत्रयस्त्रिंएशाभ्यां नवमदशमे सोऽष्टाचत्वारिंएशं नवमे निधाय पञ्चदशषट्कानादत्ते सर्वए षोडशिनं ते सप्तचिएशत्तृचास्तेषां चतुर्विंएशति मादाय दशमस्याह्नोऽष्टावष्टौ पवमानस्थानेषु निदध्याच्चतुर आज्येषु तथा पृष्ठेष्वेक मग्निष्टोमसाम्नः स्थाने तथा सार्पराज्ञे त्रयस्तृचा अतिशिष्यन्ते तान् प्रथमस्याह्न उक्थ्यस्तोत्रीयान् कुर्वीतैवं तदुक्थ्यादुक्थ्य मभि संक्रामति त्रिवृतः पञ्चदश मेतां महावृद्धी

सम्पद्दिशावचत आचार्या दशरात्रो महाव्रतमस्य ह्यग्रं गत्वा स्वर्गगमन मुपपद्यत इति नैषा सर्वस्मिन् दशरात्र उपपद्यत इत्यौपमन्यवस्तस्य त्रृचा अति शिष्यन्ते ताभ्यो ऽग्निष्टोमसण्स्थ उक्थ्य स्तोत्रीयान् कुर्वीतापरूप तच्छन्दोमेष्वेवैषा सम्पत्सिष्यतीति तदपीव मेव ब्राह्मणं भवति इत ऐन्द्रोऽत इति हौवाचाभिप्रतारी काक्षसेनिर्ये महाव्रतस्याग्रं गच्छन्ति क्व ते ततो भवन्तीति षडहं महाव्रत मवोच-त्तस्य ह्यय' गत्वा त्रिवृत्पञ्चदशयोः पक्षयोः क्रियां दर्शयति तदपीव मिव ब्राह्मणं भवति त्रिवृत्पञ्च-दशावेव स्तोमौ पक्षौ कृत्वा स्वर्गं लोकं प्रयन्तीति तयोः समासश्चतुर्विंशमष्टाचत्वारिंशो द्वाद-शातिशिष्यन्ते ऽष्टमास्तथा दशमास्ते चतुर्विंशो य एते सम्पदो विदुस्ते पक्षिणो ये न विदुस्ते पक्षास्त-दपीव मिव ब्राह्मणं भवति ये वै विद्वाण्सस्ते पक्षिणो येऽविद्वाण्सस्ते पक्षा इति ॥ ११ ॥

अथातो गवामयनं तदेक एकेनाह्नाभिविदधते ज्योतिष्टोमेनाथैके ऽतिरात्र-चतुर्विंश-नवाहव्रता-तिरात्र इति कृत्वा ज्योतिष्टोमेनैव सण्स्तृणन्त्यथैके गोआयुषी दशरात्र मित्युपारभ्योत्तर संवत्सर-

प्रवर्हं द्रत्याचक्षते शङ्काहृत मिति चैतस्या सम्पूर्णो वार्कखण्ड श्वासाञ्चक्रो नानाहोभिर्वयं कल्पयामो यथैतद् ब्राह्मण मथ खलु य ऊर्ध्वं ज्योतिष्टोमदशा-हाभ्यां यज्ञक्रतवः सप्तभिः पर्यायैस्तेषु ज्योतिष्टो-मानां च दाशराचिकाणाञ्च द्रव्याणा मागमो भवति स्तोमान्वितानि स्थानान्वितानि पृष्ठान्वितानि तन्त्रा-न्वितानि भागान्वितानि सङ्ख्यान्वितान्याशीःस-प्रायाणीतिरूपाच्छान्दसान्यायत्यपि च व्यावृत्त्यर्थानि तत्रेह चतुर्विंशे यानि सप्तमात्स्तोमान्वितानि तानि यानि द्वितीयात्स्थानान्वितानि तानि यानि ज्योति-ष्टोमात् पृष्ठान्वितानि तानि यानि दशरात्रात् सर्वाणि रूपाणि क्रियन्त इति तानि यानि छान्द-सान्यभिवन्ति प्रवन्ति स्वध्ययनप्रवादान्युपक्रमे ऽभि-रूपाणीति तानि तत् खलु बृहत्पृष्ठ रथन्तरं मध्य-न्दिन कुर्म उपक्रमणीय मह्वरिति रथन्तरं द्वितीय मिति बृहद्वेके चोभयसामान इति ह स्माह शाण्डिल्यायनो बृहत्पृष्ठास्ते रथन्तरमध्यन्दिनाः कुशलेनैवं स्वे सवने स्वे छन्दसुभे वामदेव्योत्तरे भवत इति चतुर्दंचप होतुराज्यं समामना-मस्तासां चतुर्थी मुद्दरस्युतीभवत्यपरूपा प्रायणार्थे

ऽध्याप्येतस्माद् रणप्रवादो भवत्यपरूपा स्वस्त्ययनार्थे-ऽप्य यच्चैतत्सर्वस्मारे भवत्येतां तत्र करोत्यथ खलु पूर्व मन्वहं ब्राह्मणात् सन्तं नान्वहं कुर्म एवञ्च रहस्य-ब्राह्मणे दर्शयत्यपि च शश्वद् ब्राह्मण मधीयते ते वा एते पूर्वातिपूर्वा ये पूर्व मन्वह मुपयन्तीति ॥ १२ ॥

उद्धरन्त्याचार्यास्त्वैककुभं समानोदर्कयोन्यपरूपं प्रायणार्थे तच्चैतत्सौभरं पृष्ठान्वितं विकल्पो वाक्यात् ब्राह्मणचोदितत्वादथ खल्वाह सर्वाणि रूपाणि क्रियन्त इति तत्र खल्वाचार्या एतेष्वेव द्रव्येषु सर्वांस्स्तोमान्त्सर्वाणि पृष्ठानि सर्वा विभक्तीर्दश-रात्ररूपाणीति भक्तिमात्रेणैव कल्पयन्ति त्रिवृत्-पञ्चदशौ चतुर्विंशाद् सम्पद्यते पञ्चदशसप्तदशान् पञ्चैकविंशान् षडेव त्रिणवान् षड् त्रयस्त्रिंशा-न्त्सर्वाणि पृष्ठानि बृहद्रथन्तराभ्या मुपाप्तान्येतत् परोक्षाणि हीतराणि वामदेव्येन वै तस्मादिष्टान्यु-दंशीयेन वै तद्धि सर्वेषां रूप मित्यनिरुक्ताया निरुक्तं विभक्त-सर्वाभिप्रायं वामदेव्येन स्वरविभक्तिः पृथग् दाशरात्रिकेभ्यो द्रव्यागमं सम्पश्येदुपवती प्रथमादग्नियवती द्वितीयाद्विद्युतवती तृतीयात्सत्रा-साहीयं सत्तोवीयं चतुर्थाद खलु साकमश्व

मुक्थप्रणये ऽकरिष्यदतिराचे तत् कृतं भवति तन्न समविचारयिषीत् तत्रैतत्स्वासाहीयं चाद्दोपक्रमादुपक्रमेद् वार्हताद् वार्हते सोढवतीषु सोढवन्नामो ऽग्नेर्दं कर्म सहेमहीति पार्थपञ्चमा दुद्वएशीयए पञ्चाद्यद्वा उद्वएशीयं तदुद्वएशपुत्र इति हि भवतीत्युद्वएशीयेनैव सर्वरूपावाप्ति मेके वञ्चसप्तमादिन्द्रे अग्ना नमो बृहदित्यष्टमात् समं तद्दैर्घश्रवसे नवमादभीवर्त्तः सत्त्रोत्रीयो दशमात् ॥ १३ ॥

॥ इति निदानसूत्रे चतुर्थः प्रपाठकः ॥

---

## ॥ अथ पञ्चमः प्रपाठकः ॥

अथैषोऽभिप्लवस्तस्मिन्त्सारस्वे गेयं छन्दःकृतं बभूवेति शाण्डिल्यो ऽर्द्धं मेव प्राग् विषुवतो ऽर्द्धं मूर्ध्वंद सादित्यव्रतानि शुक्रियाणि विषुवति स तवश्रावीयानि सामानि व्रत इति जमूहति वार्हद्रथन्तरपृष्ठादनित्याभिरनित्योऽयए षडह इत्यपाडहिकीरनित्या इत्याचक्षते ते खलु शम्बह्वाश्चिनः स्तोत्री-

यात् प्रतिपदः कुर्वन्ति यथास्थान मेवानुरूपाननुरूपान् वयं प्रतिपदः कुर्मः सोचीयाननुरूपानेवं यथोत्तरए सोचीयानुरूपाणां प्रत्याहारो भवतीति षडहवशेन नाना प्रतिपदः समान पर्यास मेकाहवशेन तेन प्रच्युतं द्वितीयपर्यासं प्रथमेऽहन्यनुगृह्णात्यथेतान्येव वै यूथिकान्याज्यान्युद्धृत्य गाय त्राणि तद्विभक्तीनि प्रतिनिदधाति चीणि त्रिणिधनानि करोति त्रीणि त्रीणि ह्येव षडहे ऽवधारितत्रिणिधनानि भवन्ति तानि यत्र यथाक्रत मध्यस्थायायाश्वं मायश्चित्तिसाम षष्ठेऽहनि चिकीर्षन् पार्थं द्वितीयस्य माध्यन्दिनाज्यं करोत्येतत् पुरस्तात्स्तोभं घनसाम वृहति षष्ठे ऽभिरूपं तेन प्रच्युत मिहवद्वासिष्ठए षष्ठे ऽहन्यनुगृह्णाति स्वरविभक्तेरनुग्रहाय ॥ १ ॥

अथैते त्वाष्ट्रीसाम चाभीगवं च तृतीयचतुर्थयोरह्नोर्व्यतिहरति चाहयोर्व्यतिषङ्गाय तत्र ता एव देवताविभक्तयो ऽथ सामान्तविभक्तय एतेषा मेव द्रव्याणां तल्लिङ्गाः कल्पयेत पञ्चमे तु निधनविभक्तिर्न विद्यते षष्ठे चेडाविभक्तिमत्राभ्यावारयन्ति वाईङ्गिरं वानुकल्पयेत् सौश्रवसं वा छक्र्याना

ब्रह्मसाम कुर्याद्गौष्ठं षष्ठे नु कल्पयेदिति तत्र त्रिकद्रुका स्तोमाः पाडहिकानि तन्त्राण्यस्ति च षडहप्रवादोऽपि चैवं रहस्यब्राह्मणे दर्शयति ज्योतिष्प्रायणो ज्योतिरुद्‌यनः षडहो ऽभिप्लव इति चैतरेयिणां तां सुमदेवं प्रयुक्त एवं ज्योतिष्प्रायणो ज्योतिरुद्‌यनः षडहो भवति यथास्थान मितरदिति तत्र यान्यैकाहिकानि द्रव्याणि स्तोमान्वितानि तानि यानि षाडहिकानि तन्त्रान्वितानि तानि यानि छन्दोमिकानि त्र्यान्तानि त्रयस्ते त्रय इमे लोकास्त्र्यास्त लोकसम्मा स्त इमे बृहद्रथन्तरपृष्ठास्ते बृहद्रथन्तरपृष्ठा इमा इति रूपा छान्दस्यान्यायन्त्यपि च व्यावृत्यर्थानि स्वादिष्ठां प्रथमस्याह्न आर्भवीयां करोति या ह्येतस्याह्न आर्भवीया भवति न तस्या उत्तरे अधीमहे तस्याः शश्वन्मापशरावय उत्तरे अधीयते तां ते कुर्वन्त्याभीशवं चतुर्थे नावमिकं कुर्यादिति धानञ्जय्यो व्यावृत्तयं पृष्ठ्याभिप्लवयोस्यातुर्थिक मेवेति गौतम एवैतस्याह्नः स्वरविभक्तिर्भवतीति भवतीति ॥ २ ॥

अभीवर्तो ब्रह्मसामेति तत्र स्तोत्रीयविधिर्यदितः समानं साम भवत्यन्योन्यः प्रगाथ इत्यस्य नानात्वं

य आस्तुतं कुर्वते यथा दुग्धा मुपसीदे देवं तदिति
प्रयुक्तप्रतिषेधस्तस्यान्ववायः पञ्चसु मासु बार्हताः
आप्यन्त इत्यथातः प्रगाथायतानि चतुःशत मैन्द्रा-
बार्हताः प्रगाथा दशतयीषु तान्त्समामनेत्तेषां चत्वा-
रोऽन्यपस्थाना बृहद्रथन्तरकालेयस्तोत्रीया अहरहः
शस्यन्त इन्द्रक्रतुरौत्तरपर्चिकः शत मतिशिष्यते तेषा
मेकं चतुर्विंशे कुर्यान्नूनं शत मतिशिष्यते सप्ता-
शीतिः सतोबृहत्यस्त एकेन न त्रिंशत्सातोबार्हता-
स्तृचास्तेषा मिहैकविंशति माहरति तद्विंशति-
शतं सम्पद्यते विंशतिशतं पञ्चानां मासाना माभि
प्लविकान्यहानि भवन्ति तेष्वेतान् प्रगाथान् प्रयुञ्जीत
तृतीयेऽहनि सतोबृहतीः कुर्वन् य एष पञ्चमस्य
मासस्योत्तमोऽभिप्लवस्तस्मिन् द्वे सतोबृहतीः कुर्यात्
तृतीयपञ्चमयो रह्नोर्न हि प्रगाथा अनुभवन्तीति
तत ऊर्ध्वं छन्दसी संयुज्यादौष्णिहे तृच एकां गायत्री
मुपदध्यात्सतोबृहत्यतिशेषं समाप्येति गौतमोऽष्टौ
सातोबार्हतास्तृचा अतिशिष्यन्ते तान् प्रथमे चाभि-
प्लवे कृत्वा द्वितीयस्य द्व्यहे तत ऊर्ध्वं छन्दसी संयुज्या-
दिति चतुरुत्तरैरेव छन्दोभिरेतव्य मिति गायत्र्यां
चतुर्विंशे ऽभीवर्त्तं कुर्यादुष्णिहि प्रथम आभिप्लविके

ऽनुष्टुभि द्वितीये तत ऊर्द्ध्वं बृहत्या पञ्चमास इत्वा य एष पञ्चमस्य मासस्योत्तमोऽभिप्लवस्तस्य पञ्चमे ऽहनि पङ्क्तीः कुर्यादपि वा षष्ठे तत ऊर्द्ध्वं त्रिष्टुब्युत्तमे स्वरसाम्नि जगत्या मित्यत्रापि सातोबृहत्यतिशेषएः समाप्येत्येवं गौतमो नव सातोवार्हतास्तृचा अतिशिष्यन्ते द्वौ च प्रगाथौ तान्प्रथमे चाभिप्लवे कृत्वा द्वितीयस्य च पञ्चाहे पङ्क्तीः षष्ठे तत ऊर्द्ध्वं त्रिष्टुब्युत्तमे स्वरसाम्नि जगत्या मिति ॥ ३ ॥

छन्दःसंयोगरूपोऽस्य विधिस्तस्मान्ने चानुवर्त्तते मासशब्दवैयर्थ्य मिति चेत् पञ्चसु मास्स्विति यथा पृष्ठ्यायनोऽपवादस्तु लिङ्गेन रुद्राणवतीवन्न च सामान्यतरये तत् कर्मांसोऽलेकदेशे यथा कालकृतो लोके कृत मिति बृहत्या चैव त्रिष्टुभा चैतव्य मिति त्रिष्टुभि चतुर्विंशे ऽभीवर्त्तं कुर्याद् बृहत्यां प्रथम आभिप्लविकेऽपि च बृहत्या मेव चतुर्विंशे बृहत्यां प्रथम आभिप्लविके त्रिष्टुभि द्वितीय एव मनुपूर्वं छन्दसोः प्रयोगो भवतीति तत ऊर्द्ध्वं व्यत्ययेद् बृहताचय एव तन्मन्य इति शौचिवृक्षिर्वृहत्या पञ्चमास इत्वा य एते ऽष्टौ सातोवार्हतास्तृच अतिशिष्यन्ते ये चैते त्रयोऽन्यचस्थाना बृहद्रथन्तरकालेयस्तोत्रीयास्तैः षष्ठे

मासि चैष्टुभो व्यत्येसेद्यद्दहः कालेयस्तोत्रीये ऽभी-वर्त्तं कुर्यात् तत्रापिरित्सिधासतीति कालेय मा-सन्नाराद् यदहो रथन्तरस्य बृहत्स्तोत्रीये रथन्तरं स्याद्पि वा स्वरसाम्नोरन्यतरस्मिन् रथन्तरस्तोत्रीयं कुर्याच्च ह्यन्नासु रथन्तरं भवतीत्यथ त्रयस्त्रिंशत् प्रगाथ मेकं चतुर्विंशे कुर्यात् सातोवाईतं त्रय-स्त्रिंशायने ऽभिप्रयुञ्जीता ऽपि वा न सतोबृहती-राद्रियेत य एव चतुर्विंशे त मनुसंहरेदिति ॥ ४ ॥

एतेनैवोत्तराणि द्व्याणि व्याख्यातान्या द्विप्र-गाथाद्यथाकारो पुरस्तात् प्रगाथानस्यात्तथोपरिष्टा-दिन्द्रक्रतौ सामानि प्रतिकल्पयेत् तावन्ति तच्छन्द-स्यानि निधनवन्ति यदि तच्छन्दस्यानि न विद्ये-रन्नपि छन्दसानि कुर्याद्यान्यभिरूपाणि स्युरीति-तश्च निधनतश्च कतम एषां कल्प इति प्रथमौ प्रतिपिद्यावित्याक्षरयेतरे सर्वे कल्पा अपि वा द्विप्र-गाथ मेव कल्पः स्याद्दोपदर्शो नूनं पूर्वानत्यक्रमी-दिति ते कस्य हेतोः षट्प्रगाथ मयनं समारम्भ-न्तीति नैदं षट्प्रगाथ मिति शाण्डिल्यायनो यः षट्प्रगाथं चिकीर्षेन्न सतोबृहतीराद्रियेतापि य एव चतुर्विंशे त मनुसंहरेदिति स खल्वय मभीवर्त्तः

षटप्रगाथानधितिष्ठति पूर्वेष्वान् पचसिद्धेश्च सतो-बृहतीरेव मैवेन्द्रक्रतुरुत्तरे पञ्च प्रगाथिकानि द्वे सतोबार्हते विकर्णं सप्टम मेव मनयोः समाधि-रित्यथैतत्सुन्नान मौष्णिह मा विषुवतः सर्वत्र पृष्ठापञ्चाहवर्जं मतिरात्राज्ञायथाकामकल्प्यारवारे-तैषा मन्नां तदभिप्लवस्य रायन्तरेष्वहस्सुविचार्यते पृष्ठे चैष मिव षडहे नाना स्वर्णिधनानि भविष्य-न्तीति पृष्ठ्या मेव छिन्दन् व्यूहेत् समूहेदिति व्यूढः स्यादिति शाण्डिल्यायन एष मत्यर्धिदर्शनं भव-त्यथापीरवं पुराण माचार्यवच इति समूढः स्यादिति धानञ्जय्य एष न्याय एवए हि ज्योतिष्टोम एवं दश-रात्रस्य प्रथमस्याह एवं दशम मेव महोनैकाहा इत्यथापि समूढ एव पूर्व उत्पन्नो ऽपरो व्यूढ एवं च रहस्यब्राह्मणे दर्शयत्येव मिव ब्राह्मणं भवति छन्दांसि वा अन्योन्यस्य लोक मभ्यध्यायन्नित्युत्पन्नश्च लोको नाम भवति ॥ ५ ॥

अथापि विलुप्तो व्यूढः षडहेन हि त्रिष्टुभः प्रतिपन्नां लभते न जगत्यो माध्यन्दिनान्तान्न गायत्र्या आर्भवान्तान् यद्येवं खल्वेतच्छन्दांसि विप्रच्युत्य दशमे ऽहनि सम्यकल्पन्ते तत एव व्यूहः सिध्यतीति

तदपेत्रवं मिव ब्राह्मणं भवति नर्त्तं छन्दोमेभ्यः पृष्ठो
बृह मानश इत्यथापि समूढेन ·षडहेन सम्प्रयुक्तो
भवतीति तस्यैके प्लवद् वहिष्पवमानं कुर्वन्ति न
ह्येता वृहत्कारिता इति नवाहयोगा इमा भवन्तीति
धानञ्जय्यः कथ मसमापयिष्यन्नवाहं नवाहयोगाः
कुर्यादिति तत्र नित्या वुपपन्नौ कविमानभिप्लवन्या-
येन पार्थं द्वितीयस्य माध्यन्दिनान्त्य मभिप्लवन्यायेन
नित्याभिः समूहति नित्योऽयं षडह इति तत्र
तान्येव सामूहिकानि यान्यभिप्लवे जनिवाष्यंव मेवै-
तदन्यत्तदेतत्स्वयोनिकामः कारयतीति कथं पृष्ठे
ऽभीवर्त्त इत्यकर्त्तव्य इति शौचिवृक्षिः पञ्चसु माससु
बार्हताः प्रगाथा आप्यन्त इत्येते पृष्ठादेवैषाग्निः
सिध्यतीति कर्त्तव्य इति गौतमो यत्सामावस्त्रेयुरव
स्वर्गाल्लोकात्पद्येरन्निति हि भवतीति पृष्ठ्यो वा स्यैतत्
सतोऽवादीन्न ह्येनं के च नाभिप्लवाच्यावयन्तीति तं
खलु बृहतोपु कालेयद्वितीय मनुकल्पयाम: सन्तान-
रूप मस्मिन् भवतीति कथ मभिजितीत्यकर्त्तव्य
इति शौचिवृक्षिः कर्त्तव्य इत्येव गौतमस्तत्पृष्ठ्येनैव
व्याख्यात मथाप्येष एवं क्लृप्त एवैकाह आगच्छत्यभी-
वर्त्तमध्यन्दिन इत्यभीवर्त्तमध्यन्दिन इति ॥ ६ ॥

अथैते स्वरसामानस्तानग्निष्टोमानाह नवाह-कारिणः कुर्युरुक्थ्यानेकविंशत्यहकारिणो योऽन्यथा कुर्यादकुशलः पुरुष इति विद्यादथैषां पृष्ठन्तोत्तीया आनुष्टुभा एकवृहतीका अनुष्टुभौ पूर्वे राथन्तरयोर्बृहत्युत्तमेत्येतदेव विपरीतं द्वितीये चतुर्ऋचं तृतीयस्य भवति तासां तृतीया मुद्धृत्य चतुर्थीं तृतीयां कुर्म एषा वृहती भवतीत्यथ यत्रासु षोडशिसाम भवति सर्वास्त्वानुष्टुभो भवन्ति यत्र खलु बृहद्रथन्तरे ते करोति स्वराणा मेव पृष्ठत्वे तिष्ठमानो ऽथ स्वराण्यानुष्टुभान्यनुष्टुप्स्विति तत्रयान्यैकाहिकानि द्व्याणि पृष्ठान्वितानि तानि यानि षाडहिकानि तन्वान्वितानि तानि यानि छन्दोमिकान्यभिप्लव एव तानि व्याख्यातानि चुम्लकवैष्टम्भं प्रथमे ऽहनि करोति दिगनुयशायादित्त मत्र स्वरं भवति तेन प्रच्युतए हि तं तृतीये ऽहन्यनुगृह्णाति पयसोः सन्तानाय विकल्पयन्त्य ऽनुष्टुभो मध्ये निधनान्यैडान्यनुजिघृचन्तः स खलु विकल्पयन्स्वाराण्यन्त्यानि कुर्यादविकल्पयन्नैडानि विकल्पयन्तस्योत हैके विकल्पयन्तस्यैडानैव कुर्वन्ति तृतीयसवनस्याचेण विकल्पयएस्त्वेवस्वाराण्यन्त्यानि कुर्यादविकल्पयन्नैडानि

वसिष्ठस्य प्रियं चतुर्थाद्यायान्तर्यात् प्रत्याहरति तैरस्यां वेति विचारयन्त्युद्दृशीयवाध मिहानुग्रहणात्यामहीयवं द्वितीयात् प्रच्युतं तृतीये ऽहन्यनुग्रहणात्यत्र स्वयोनि भवतीति ॥ ७ ॥

अथैष विषुवान्त्सत्र खलु बृहद्रथन्तरे करोति शुक्रियाणा मेव पृष्ठत्वे तिष्ठमानो ऽथापि स्वर्गौक्सौ विषुवान् सत्र स्वर्गौक्से बृहद्रथन्तरे अचिक्रोपौक्ते यस्यवमानयोर्निद्धात्येतदेनयोरपयशोः स्थानं भवति ते गद् बृहत्यां चानुष्टुभि चैतौ नैदिधिनौ चातुष्पदावावापा विति तत्र खलु गोतान्तं करोत्येतदन्ततन्ततर मन्तं विधेयं भवति मध्यतस्तत्र यान्यन्तलक्षणानि ( मध्यलक्षणान्य- * ) ज्योतिर्विधानि शान्तिविधानि शुक्रियसङ्गान्यभिरूपाणि तान्यथ खल्वत्रानुष्टुभः प्रतिपदः करोति यथैतद् ब्राह्मणा मुपवर्तौ वयं परमे ऽहनि परमां प्रतिपदं कुर्मो यान्यन्यानि बृहद्रथन्तराभ्यां पृष्ठानीति ह स्माह शाण्डिल्यायन उपवत्येव तेषां कुशलेनोपोह्येत तानि बृहद्रथन्तरे इत्यथापग्रात्मोक्तौ विषुवान्तं प्राणोत्तया गायत्र्या प्रत्यपिस्योद्दान्तो ऽनादान्त मिति वा वातेनावहरिवति माय-

---

* 'क पुस्तके लेखोऽयं न विद्यते।

शरावयोऽग्निरिन्द्राय पवत इति शुद्धाशस्या उत्तरे उपवती चाग्नियवती च तत्रैके नाभीवर्त्तं कुर्वन्ति पौर्वपक्षिकोऽयं भवत्यथाप्येवत् सुज्ञानेन समाधिरिति मध्यन्दिने वयं कुर्म एव मिव ब्राह्मणं भवति तादुभौ विषुवति कार्याविति यद्देतत्सुज्ञानेन समाधिरित्यार्भवचरं तद्भवति नो पूर्वपक्षिकं मूर्द्धं पृष्ठाद्चिकीर्षीत् ॥ ८ ॥

अथ खल्वाह त्रिष्टुब् जगतीषु भवतीति कस्येदं ब्राह्मणट् स्यादिति पृष्ठाग्निष्टोमसाम्नोरित्याहुरेते कल्पाख्याते भवत इत्यथाप्याहुस्त्रिष्टुभ एवेमा जगत्तद्दृत्तयो भवन्तीत्यथापराहुस्त्रैष्टुभजागतादेवेमाः सूक्तादाहृता भवन्तीत्यथाप्याहुर्जागत मेवाचैकं पदं भवतीत्यपि वा सम्पद एव ब्राह्मणट् स्यादपि वा योनिवादश्च कर्मवादश्च स्याज्जागतट् हि सत् त्रिष्टुप्सु क्रियत इति समसितव्यास्त्रिष्टुब्जगतीमन्य इति कौत्सस्त्रिष्टुब्जगतीषु भवतीति सति किं मन्यत् समासादित्यावृत्ते पृष्ठेऽऽभीवर्त्तलोके सामानि प्रतिकल्पयेदिति गौतम एवं च पचसोः समाधिरपि चेवट् स मा मेन्द्रक्रतुरनुपद्यात इति तत्रैतेषा मेव चत्वारि यान्यभिप्लवे वासिष्ठा गौष्ठवे च द्वितीयप्रथम-

योरह्नोः शुद्धाशुद्धीयं चेति विचारयन्ति शाण्डिल्य एतद्दशरात्रनिधनं भवतीति नाद्रियेतेति शौचिवृक्षि-स्तद्भीवर्त्तनैव व्याख्यात मथापि नित्यान्येवाभिरूप-तरायौतीन्द्रक्रतु मस्तूयमान मनुशंसयन्त्सामानि प्रतिकल्पयेदिति गौतमो जनिचं विश्वजिति यानि पृष्ठ्याऽभीवर्त्तलोके तानि दाशरात्रिके पृष्ठ्ये तेषां चत्वारि छन्दोमेषु यथाभागं यथापृष्ठं वा पौरुमीढं व्रतेन सावेण श्येतं वा तन्त्वसाविणैवं वा खलु कुर्यान्न वाद्रियेतासा मा न मिन्द्र क्रतु मनुशंसयितु मिति ॥ ८ ॥

अथोप दशरात्रं सम्भृतां पूर्वे पक्षसि विचारो भवत्यतिरात्रचतुर्विंशे श्रौनभिश्रवान् पृष्ठ्या मिति कृत्वा पञ्चायनमासानुपेयुरभिजित् स्वरसाम्नो न निःशत्तमा मुपसम्भरन्त्यथैतं दशरात्र मेक आवर्त्त-यन्त्यावृत्तिसाधूत्तरं पक्ष इति न वय मावर्त्तयामो ऽनुपेतं पूर्वे पक्षसि तं कस्मादावर्त्तयामेत्यथापि नियुक्त-मानसो भवति यद्यु हैन मृते मानसादावर्त्तयिष्यद्दशमं च मानसं चरद व्यवयिष्यद्यद्यु वै स मानसं व्रतं च मानसञ्च व्यवयिष्यदपि चाव्रतेन दशरात्रेण मानस मध्यशाययिष्यत्स कस्य हेतोरव्रतेन व्रतेन मानस

मधि गाययतीति वृतसाम्वन्धात्प्राजापत्यं व्रतं प्राजापत्यं मनः सर्वाग्निवृतए सर्वाग्निमनस्तदपि शश्वत् सांवर्गजिता गोतमा उपरिष्टाद्वृतस्य मानस मधीयते प्राकृते न वृतेन मानस मधिशेषयामेति सामान्यात्तु वय मनधिशाययन्तो मन्यामहे ऽथैतान्यधिपयन्त्यहानीत्याचक्षते विरात्र त्रतुर्विंएशे नवाहड्डोश्चायुषो दशरात्रं वृतातिरात्रे अजयणादनपक्रमणादित्यनपक्रमणादिति ॥ १० ॥

अथातः संवत्सरा वर्गाणां पञ्च संवत्सरा वर्गास्तेषु धीरो मनीषया कर्मणा उपसदो विद्यात्सएख्या वेषु वृतानि च षट्त्रिएशोनो नवोनश्च षडहोनो ऽथ सावनो ऽथाष्टादशभिर्ज्यायानहोभिः सावनात्परो नक्षत्र मिद मासश्च तस्य चैव त्रयोदशो चान्द्रमसः सावनश्चोभावथाष्टादश्युत्तमो ऽष्टासप्तचिएशतं पौर्णमास्यां प्रसाधयेद् गवामयनस्योपायएश्चतुरः प्रतिपादयेत् तेषां नक्षत्रः प्रथमस्तस्य सप्तविएशिनो मासाः सप्तविएशतिर्नक्षत्राणीति तस्य कल्पः प्रथमस्य प्रथमस्याभिप्लवस्य स्थाने त्रिकद्रुकत्र्यहं कुर्यात्माग्विषुवत उत्तमस्योत्तमस्योर्ध्वं विषुवतस्ते खल्वभिप्लवतन्त्र एव क्लृप्ताः स्युरित्येक एते चेहाधिक्रता न चापि निव-

त्संयत्यथापि दृश्यते त्र्यहस्त्र्यहतन्त्रे क्लृप्तो यथा स्वरसामानस्त्रिकद्रुकपञ्चाहस्थाभिप्लवतन्त्रे सप्तदशरात्रे स्वरतन्त्रा इत्यपर मेवञ्च तन्त्राविलोपोऽपि च सूत्रेषु त्रिकद्रुकत्र्यहः स्वतन्त्रो भवत्यथ नवीनस्त्वेवं त्रयोदश मासाः सम्भार्ययोर्मासयोर्नवाहं लुम्पेच्चतुरह मेव प्राग्विषुवतः पश्चाद्द मूर्द्धं तस्य कल्पः प्रथमस्याभिप्लवस्य स्थाने ज्योतिषं च गां च कुर्यात्प्राग् विषुवत ऊर्द्ध्वं विषुवत उत्तमस्याभिप्लवस्य स्थाने ज्योतिषं नाच विषुवानभिभवत्युत्तरे ऽत्र पक्षसि विषुवानुपसङ्ख्यायत इत्यथ षड्नाश्चान्द्रमसाः षट् पूर्णोपक्रमा ऊनावसानाः पूर्वे पक्षसि मासाः खुल्लनोपक्रमाः पूर्णावसाना उत्तरे तस्य कल्पः प्रथमस्य प्रथमस्याभिप्लवस्य स्थाने ऽभिप्लवपञ्चाहं कुर्यात्प्राग्विषुवत ऊनेषु मासेषूत्तमस्योत्तमस्योर्द्ध्वं विषुवतः ॥ ११ ॥

व्याख्यातः सावनः स एष आदित्यसंवत्सरो नाक्षत्र आदित्यः खलु अश्वदेतावद्भिरहोभिर्नक्षत्राणि समवैति त्रयोदशाहं त्रयोदशाह मेकैकं नक्षत्र मुपतिष्ठत्यहस्तृतीयं च नवधाकृतयोरहोरात्रयोर्द्वे काले चेति सांवत्सरास्तास्तत्पञ्चागतं कलास्ते षण्णवनवर्गाः स षट्षष्टित्रिशतः षष्टित्रिशते

श्लोकौ भवतः सप्तविंशतो राष्ट्रस्य राज्ञो वसतयो मितास्त्रयोदशाहं त्रयोदशाह मेकैकं नक्षत्र मुपतिष्ठति त्रयोदशाहानि तृतीय मङ्गश्शतसस्त्रेधा दशतयो विकुर्वन् स्थिणवं पन्थानं विततं पुराणं चत्वारिंशता नवरात्रैः समयुत इत्यथाष्टादशभिर्ज्यायानादित्यसंवत्सर एव तैर्यगयनिको भवत्यादित्यः खलु शशूरेकादा यस्मासानुदङ्डेति नव चाहानि तथा दक्षिणा तदप्येते श्लोका भवन्ति यस्मिन्वै परिवत्सरे सौर्यौ मासौ ऽथ चान्द्रमसो नात्त्वचो न विलुप्यते कः स्वित्तं वेद कः स्विदष्टासप्ततिःत्रिंशते तस्मिन्संवत्सरे मिते सौर्यौ मासौ ऽथ चान्द्रमसो नात्त्वचो न विलुप्यते सप्तविंशति मेवैप सप्ताहानीति दक्षिणा तथोदङ् सप्तविंशति मिति तत्र कल्पः सम्भार्ययोर्मासयोरष्टादशाहान्युपाहरेन्नवाह मेवप्राग्विषुवतो नवाह मूर्द्धं त्रिकद्रुकाण्यभिप्लवं च प्राग्विषुवतो ऽभिप्लवञ्च त्रिकद्रुकाण्यावृत्तानूर्द्ध्वं विषुवतः ॥ १२ ॥

कथ मनाहिताग्नेः सत्रासन मिति न विद्यत इति शाण्डिल्यायनः सर्वं इष्टप्रथमयज्ञाः पृथक् सत्रोपकरणानोष्ट्वा समाप्याग्नीन्त्सत्र मासिरन्नोदवसानीयान्तान्त्विजो वृत्त्वा पृथक् पष्ठशमनीयैर्यजेरन्निति

नो विधानं यथा त्विद मद्य सचित्रो भवन्त्यहीन-याजका इमे कृष्णाजिनकण्ठा भवन्त्यथापि यः सत्रे करणाद्यजमानो मन्येतापि नूनऌ सो ऽहीनेकाहेष्वपि यजमानो मन्येत तत्र ह्यपि करोतीति यद्यु वै यज-मानशब्दाद्यजमानो मन्येतापि नूनं ये यजामह इतीष्टिपशुवन्धेष्वपि यजमानो मन्येत तत्र ह्यपि करोतीत्यथाप्याह य एतेनानिष्ट्वेति तदेतदनाहि-ताग्नौ साधिष्ठ मुप पद्यत इति विद्यात इत्यपर मेवं च समारम्भोऽपि चैवं सूत्राणि भवन्ति स्थालीपाकैरना-हिताग्नयो यजेरन्नित्यथापि हश्यते पराग्निष्विज्या यथा पुरोहिताग्निभिरश्व मनु चरन्तीति तदपि यच्छब्द् ब्राह्मणं भवति यथा परस्येनाध्वान मियादेव मेव स्वर्गं लोक मन्वेति यः पराग्निषु दीक्षित इत्य-थापि ब्राह्मणं भवति तेषां ये पुरोडाशिनः स्युरपि ह्यपुरोडाशिनो भवन्तीतीवार्थी भवत्येतेनानाहिता-ग्नीनाऌ सत्रासन मुक्त मथापि ब्राह्मण मेव भवति तेषां ये पुरस्ताद्दिदीक्षाणाः स्युर्यद्यु वैषां गृहपति-रित्यपि ह्यदिदीक्षाणा एव भवन्तीतीवार्थी भवत्येते-नानिष्टप्रथमयज्ञानाऌ सत्रासन मुक्तम् ॥ १२ ॥

॥ इति निदानसूत्रे पञ्चमः प्रपाठकः ॥

## ॥ अथ षष्ठः प्रपाठकः ॥

अथापि समाहारसिद्धि सर्वं भवति तदेतत् समरूप सम्नयस्तव द्रव्याणि च मन्त्रेष्वेव मित्यथ यथै- तच्छाणिडल्यायनीयगृहपतिस्तथा विगृह्णीते ऽथ कः पृष्ठशमनीयः स्यादिति यथाकामी पथ्यानां दक्षिणा- वता मिति वार्षगण्यो ऽनारभ्य वदति तस्माद्दुदवसाय दक्षिणावता यजेतेत्यथापि पृष्ठशमनीयं नाम क्रतु मधीमहे ऽथापि सारस्वतस्येष्टिरेव पृष्ठशमनार्थो भवति तथा दार्षद्वतीरयोरिष्टिर्वा पशुर्वेति ज्योतिष्टोम इत्यपर मनादेशे क मन्यं प्रतीयात् मथाप्याह यामि- तदक्षिणेव स्यादेष एव कार्य इत्यमितदक्षिण उ खलु पृष्ठशमनीयो भवत्यथाप्येष सत्राणा माद्यन्तेषु दृष्टो भवत्यथ मु खल्वन्ततम इत्यथाप्येष उच्चावचान सांह्वाराणा मन्तेषु दृष्टो भवति यथा चातुर्मास्येषु वाज पेये राजसूये सदृश-वत्सयोरिति यदेतत् सारस्वं दार्षद्वतीरयोरितीष्टिप्रायः स भवति सुत्याप्रायं तु ज्योतिष्टोम एवाभिरूपतर इति तदपि शश्वद ब्राह्मणं भवति तस्माद्दुदवसाय ज्योतिष्टोमेनाग्नि- ष्टोमेन रथन्तरपृष्ठेन सहस्रदक्षिणेन पृष्ठशमनीयेन यजेतेति यजेतेति ॥ १ ॥

अथात एकाहास्तेषां यानि ज्योतिष्टोमानि द्रव्याणि नित्यानि तानि यान्यन्यान्युक्तान्वयानि तानि बृहत्पृष्ठेष्वन्यत् तन्त्रं करोति बृहदेकाहेषु स्थानवच्चिकीर्षन्नस्य प्रतां माध्यन्दिनीया सेषा सछ्स्थापिता बृहतेति यस्तेमदा मार्भवीया सेषा बार्हता दक्ष इत्यथ यत्र सार्थिचिकीर्षा * भवति परिस्थानां तत्रार्भवीयां करोति तदाहुः परिस्थानैवैतस्य तन्त्रस्य पुनर्भवीया बभूव ताछ सानुवारारिष्टिरपनिनाया-पडहमान्नो भवतीति सैषा तयोर्वाक्सछ्हिता प्रोच्यते ऽतो यान्यन्यानि द्रव्याणि बार्हतलिङ्गानि वा तानि भवन्ति बार्हतेभ्यो वाहोभ्यो ऽयछ् सोम इति माध्यन्दिनान्तीया बार्हतलिङ्गा सूर्यवत्य आर्भवान्तीया दशमादन्ताग्निवता यस्मो हि बार्हत्पृष्ठ मित्ये-तङ्गोस्तन्त्र मित्याचक्षते ऽथ यत्र ज्योतिष्टोमे तन्त्रे बृहत्पृष्ठं तद्राजयज्ञेषु वृषा शोणा भवति वृषा हि राजेति व्रात्यस्तोमानां च ज्येष्ठयज्ञे राजजातीयत्वा-द्वैतस्मिन्नेव तन्त्रे बृहत्पृष्ठे सूर्यवत्यो न चेच्छन्दोम-विलोप उत्तमाद्वा पृष्ठादार्भवे स्तोमं प्रत्यवरोहः प्राग् ज्योतिष्टोमविचारेभ्य एतयोस्तन्त्रयोः स मास मुभय-

* "शाश्री चिकीर्षा"—इति ष।

सामतन्त्र मित्याचक्षते प्रतिलोम मग्निष्टोमेष्वनुलोम मुक्थ्येष्वग्निष्टोमभक्तिर्हि स्वादिष्ठोक्थ्या भक्तिर्यस्ते मदाय यचैकर्चौ माध्यन्दिनीया भवन्तीन्द्रायेन्दो मरुत्वत इति तत्र करोत्येषा सामान्या तृचप्रथमा मरुत्वतीत्यथ यत्रान्ये माध्यन्दिनीयार्भवीये भवतः कल्पसप्रायाणि च द्रव्याणि तदाशीस्तन्त्र मित्याचक्षते ऽथ यत्तदभिवादि द्रव्यं भवति यत्कामः क्रतुस्तत्कल्पसप्राय मित्याचक्षते तदेतत् सार्वक्रतुकम् ॥ २ ॥

अथैतानि बृहद्रथन्तरयोर्विभक्तानि स्थानान्यपीतरेतरस्य तन्त्रं गच्छतोः प्रतिपदाज्यानि ब्रह्मसामौष्णिह मित्यभीवर्त्तस्तु राजयज्ञेषु भ्रातृव्यस्याभिवृत्त्ये भ्रातृव्यवान् हि राजेति यत्र वोभयसामा सन् रथन्तरपृष्ठोमा नौधसेन बृहतः प्रत्याहारो ऽभूदितीव यत्र वा प्रजापतिप्रवाद एकाक्षरणिधन एकः प्रजापति रिति यत्र वाहर्गणस्य नाना ब्रह्मसामानि चिकीर्षति तत् प्रथमे ऽहनि करोत्यक्षरणिधनानां * प्रथम मायतन मिति श्रायन्तीयं प्रायश्चित्तार्थेनैव भवत्यथ यत्र नाग्निष्टोमसाम भवति तद्यज्ञायज्ञीय

* "करोति यथाक्षरणिधनानां"–इति ख ।

मनुष्टुभि भवत्येष नेदिष्ठे चतुष्पद आयतय इत्यथ यत्र श्यावाश्वं प्रच्यवते तद्रथन्तरपृष्ठेषु शुध्यं निह-वानुग्रहाय व्रात्यस्तोमेषु च व्रात्यानां सुपर्ववायाथ यत्र स्तोमप्रत्यवरोहस्तद् बृहत्पृष्ठेषु पौष्कलद् रोह-दर्शनद् शुध्यं स्तोमप्रत्यवरोहे न चिकीर्षति विषमेषु स्तोमेष्वभि सोमा रायन्तरेषु परीता वार्हतेष्वेते राथन्तरीवार्हत्याविति तच गोआयुषीऽर्द्धे चतुर्ऋचस्थे कुर्वन्ति भाल्लविनश्चतुरस्तृचैकर्चान् व्यत्यासेन काल-बविनोऽध्याख्यायां स्वेवैकर्चावद् एकर्चा प्रथमाया मङ्गस्तिसृषु पराग्वद्रिसृषु पूर्वास्वदो ऽध्याख्याया मिति शाट्यायनिनस्तृचप्रथमायां वय मेकर्चं कृत्वा तस्मिन्नेव तृचे द्वे तृचस्थे अध्याख्याया मन्तत एकर्चं ताण्ड्यमकर्णकृमेत्यावचत इतरथा अनध्याख्यायां मध्य एकर्चावभितस्तृचौ यथैतद्विष्टुप्वृषभ इति ॥ ३ ॥

विभक्तावुकथ्यमथौ प्रमण्हिष्टीयवन्ति रायन्त-रेषु साकमश्ववन्ति वार्हतेषूदण्शीयान्तान्युभयेषां पङ्क्त्यनुग्रहायाथ यत्र चतुर्थो भागः प्रत्युपशेते नार्मेधं वा नार्मेधसदृशं वोक्थ्यान्तेषु चिकीर्षितं भवत्यथैतौ विश्वजिदभिजितौ पृष्ठ्यपृष्ठौ स्तोमयोरन्तस्थ वेति शाण्डिल्यः पृष्ठ्यस्तोमस्याभिजित्पृष्ठाश्च विश्वजित्-

छन्दस्सु ब्राह्मणेनैव तद्व्याख्यातं कानि तन्त्राणीति चतुरहतन्त्राणीति गौतमस्तद्विजानीमश्चतुर्थे ऽहनि चतुर्थप्रतिपद माद्दिशैकाहतन्त्राद्वानि मुपजिगमिषन्नस्य प्रश्नं करोतीति धौम्याहीनिकान्येक मेकैकाहिक मिति धानञ्जय्य एवं पर्वणाहीनस्थादान मेकाहतस्माद्द्वावे रूपायः स यदेतद्धेतत्तन्त्रान्वरः सोमकारित आवाप उद्धरति अनुपेकर्वौ स्तोमकल्पार्थंस्त्र ज्योतिष्टोम्यौ करोति तयोः स्थाने नाधमिकौ नानात्वार्थौ ऽथ यत्र षडहो भवति साप्तमिकौ तत्र ककुभं करोत्यसञ्चाराय तत्र खलु षट्स्तोभान् करोति चतुरोऽयं वीरानुपक्रतस्त एते चत्वारः समानयोनयः समानार्षेयाः पुन्नामधेया गणनामधेया गणेडा गणनिधना अपि वा चातुर्विध्यादेव क्रियेरन्नप्रास्तु यदेवं प्रयुक्त एव भिडातो रोहोऽपि चैवं दाशराविकौ ऽवसानौ भवतीति तान् खल्वन्त्यान् करोत्यथैषाद स्वं छन्द इति तान् कुशलं यज्ञिन्यास्तु धर्ता दिव इत्युत्तम एतासु स्वयोनि रथाप्येता अन्तलक्षणैः सम्पन्ना इति व्याख्याता अर्कास्तेषां तदेवानुपूर्व्यं यत् त्रिरात्रे गौपूक्तं प्रायश्चित्तिसाम षट्स्तोमबाध मर्कं द्विपदास्वनुगृह्णाति तेन प्रच्युतं वारवन्तीय मुष्णिष्वन्तसाम

साप्रच्योष्टेति विपरिहरत्यानुष्टुभे अजाम्यर्थं एतेनैवो-त्तरे व्याख्याता उद्धरति पदस्तोभान्न स्तोते । चतुरो वीरानुपक्लृतास्तत्र कुशलं यन्नित्यादिपदस्तोभापाया-दर्कः स्वर्‌ । स्थानर्‌ समापद्यते तस्यानुसमापत्तिर्‌ युध्मवारयन्तीये समापद्येते । अतो यो द्रव्यविकारः स्तोभकारितः स भवति ॥ ८ ॥

अथ खल्वाह वसिष्ठस्य जनित्रे भवत इति कथेदं ब्राह्मणर्‌ स्यादिति वृहद्रथन्तरयो रविप्रयोगस्येत्याहु रेते विश्वोवसीयसी आजनित्रे भवत इत्यपि वा रथन्तरस्यैव दिर्योगस्यैतद्धि वासिष्ठ मित्यपि वा रथन्तरस्य हवतस्य वासिष्ठस्यैते वासिष्ठे भवत इति जनित्रे एवानुकल्पयेदिति कौत्सो जनित्रे भवत इति सति किमन्य दनुकल्पनान्न त्वेवानुकल्पयेन्न स्तोते आनवकाश्यान्नुकल्पयतोस्येतेषां त्वेव विचाराणा मेकस्यैतद् ब्राह्मणर्‌ स्यादेकस्तोमता मिवाङ्गां दिदर्शयिषन्नुत्तमे भागस्तोमान् करोत्येते प्राप्तस्थाना इति पञ्चरात्रस्य चतूरात्रेणैव पृष्ठवादो व्याख्यातस्ते खलु स्वासु करोति न ह्ययं चतुरो वीरानक्लृतो ऽथापि नानाभागश्चतूरात्रो ऽथेह समानभागे चतुर्थपञ्चमे इति कानि तन्त्राणीति पञ्चाह-

तन्त्राणीति गौतमस्त्वचतूरात्रेणैव व्याख्यातं चत्वार्यहीनिकान्येक मैकाहिक मिति धानञ्जय्यस्तत्रैव व्याख्यात मग्निष्टोमः प्रथम मह रुक्थानि मध्ये दशरात्रन्यायेन यत्र सप्तमाभिप्रयुज्यत एषा ऽभिप्रयुज्यत उद्धरति षोडशिनं चतुर्थाहिराजा मन्वपायं स्वराजोपेयुः स्तोमस्य वा लोभादथाप्येन मतिरात्रे करिष्यन् भवति तन्न समवैविचारयिषीदुद्धरत्यातीयाहीय धर्मिणि तत्पुरा षडहे धर्मिः भवति तत्र याथात्म्यात् क्रोशं प्रत्याहरत्यपि वा सुख्येन प्रच्युत मित्यानुग्रह्णाति तदु भवत्यूर्द्धं बार्हते ऽहनीति स्तोमकारित आवाप एतेनैवोत्तरो व्याख्यातः स्तोमकारित उद्धारः सप्तदशं षोडशिनं करोति यो वा चाङ्गः स्तोमं स षोडशिनो न्यायेन यो वाङ्गि भक्तिरेव मुत्पन्नो हि भवत्यथाप्यनादिष्टव्यूहेन भवत्यथा कथ महीनाङ्गो रात्रेरितीति क्रसीयानित्यह स्तोमं से त मनु यन्त पञ्चामो ऽथाप्याह सप्तदशं स्तोमानातियन्ती व्रताप्ति मुत्तर मुपक्रत स खल्वेकाहा कृप्तास्ते व्याख्याता ॥ १०॥

ऋतुषडहे कथं रात्रिरित्यकर्त्तवेति गौचिवृद्धिरेव मुत्पन्नो हि भवत्यथाप्यनादिष्टा व्यूहेन भव-

त्यथापि कथ महीनाह्नो रात्रे रुपायो ऽभविष्यदित्य-
थापि कृत्स्नतायै वै नून मिह रात्रिः क्रियेत कृत्स्नो-
ऽयत् षडह इत्यथापोष चतुर्थो भागो रात्रेः कृत्ये तत्
कृत्स्नो ऽयं षडह इत्यथापोष चतुर्थो भागो रात्रेः प्रत्य-
र्द्धिता मत्यक्रमिष्यदिति कर्त्तव्येति गौतम आदिष्टा
कल्पेन भवत्यथापोपाहीनसंस्था यद्रात्रिसत्रा मव-
सानभूतां मह महरागच्छतीत्यथायोषो ऽहीनन्यायः
सर्वे ते रात्रिसतो ऽयाप्यरात्रिकं व्रतं सत्रान्ते निपा-
ताद्रात्रि मुपधीयमानां पश्यामो यथा सप्तरात्रेष्व-
थापि यः पृष्ठ्यावलम्बनस्य पञ्चमादनादेशाद्रात्रि
मुपनयेदर्थापायाद्रात्यपायाच्च स्तोमप्रत्यवरोहो ऽपि
सोऽर्थागमाद्रात्रिं प्रत्येतु मर्हतीति यदेतदेव मुत्पन्न
इत्यनन्ते वै तत्र भवत्यन्तदर्शना रत्निरिति यदेतद-
नादिष्टव्यूहेनेति नित्यत्वान् नून मेनानादिश्यतीति
यदेतत् कथ महीनाह्न इति कथं वा अप्रातिरात्रिको
ऽभविष्यदिति पश्यामथाहीनिकेभ्यस्त्र्येभ्यो रात्रे-
रुपायं यथा त्रिरात्रेषु यदेतत् कृत्स्नो ऽयत् षडह
इति कृत्स्नो हैव षडहो रात्र्या तु कृत्स्नतरो भवि-
ष्यतीति यदेतदत्यक्रमिष्यदित्यषह एवाभिक्रान्तो
भवत्यतिक्रामन्तं च पश्यामो यथाप्तोर्यामे गौरीविता

मायात् पृथक् स्वाराणि स्तोत्राणि करोति नाना साधुरहीन इति स यदेतान्येतानि रूपसम्पन्ना-नीति ॥ ११ ॥

आयुष्कामयज्ञ उत्तरस्तत्र त्र्यही समस्य निरु-धात्यहीनत्र्यहं चैकाहत्र्यहञ्च काम ईतो रिति त्रयः प्राणापानव्याना इत्यऽग्निष्टोमसंस्थं ज्योतिष मैषाम प्राकृती संस्था ऽथाप्येतया संस्थया चर-त्यथा ऽपि नानात्वयाविमौ त्र्यही तानुपक्रमसंस्थया प्रतिक्रमियोदषोडशिका रात्रिः स्तोमत्रात्रेणा-षोडशिको ज्योतायुर्भवतीति द्वितीयस्याह्नो वासिष्ठं माध्यन्दिनात्यत् स्यादिति शाण्डिल्यः पृष्ठार्थेनेदं पुरा प्रच्यवते नेह पदार्थं इति पार्थ मेवेति गौतम एतत् समूहसाम समूढावच्छेदोऽयं भवतीति तृतीयस्यानुष्टुभि बृहत् करोति त्र्यहे समं बृहद्रथन्तरे युयुत्समाणो ऽत्यर्थं चैव स्यात् पृष्ठ्यावलम्ब उत्तरस्य पञ्चाहो बृहद्रथन्तरपृष्ठ एव विश्वजिति हि पृष्ठानि करिष्यन् भवत्युद्गति षोडशिनं चतुर्थात् तत् पञ्च-रात्रेणैव व्याख्यातं त्रयस्त्रिंशानि पञ्चमस्याह्न उक्-थानि रात्रिकारितो हि स्तोमप्रत्यवरोहस्तान् विश्व-जिति करिष्यन् भवति भवति ॥ १२ ॥

अथातः सप्तरात्रस्य पृष्ठ्यं व्रतं सप्तमं करोत्येतदस्तं पृष्ठं भवत्यथाप्यनङ्ग मेतद् व्रतस्य यदुक्थानि तत् ज्योतिष्टोमानि स्तोमान्याहरति, षोडशिमती रात्रि रहीनन्यायेनाथाप्यनङ्ग मेतद् व्रतस्य यद्रात्रिस्तत्र यैव कृत्स्नतमा रात्रिस्तमी हरतीति सप्तदश मुत्तरस्य व्रतए स्तोमकारित उद्दार स्तस्य स्तोमान्वयीतुक्थानीति किए स्तोमानि स्युरित्येकः विएशस्तोमानीति गौतम एष एषां प्रकृतिस्तोमो (न) भवति त मन्वियुरित्येतत् स्यात् सप्तदशस्तोमानीति धानञ्जय्य एषोऽस्य व्रतस्य स्तोमो भवति त मन्वियुरित्येतरस्मात् पञ्चविएशस्तोमानीति शौचिवृक्षिरेष व्रतस्य प्रकृतिस्तोमो भवति त मन्वियु रित्येतरस्मादथापैवं तासाए स्तोत्रीयाणा मनुयष्टो भवति याः पञ्चविएशाद् व्रतात् सप्तदशे क्रियमाणे ऽपयन्ति द्विपदस्तोत्रीयेनानुएक्षेते ते चेदनुजिघृक्षेत् त्रिणवं प्रथम मुक्थं कुर्यादेकविएशं षोडशिनं करोत्येषो ऽस्य प्रकृतिस्तोमो भवत्यथापैवं तासां स्तोत्रीयाणा

रन्मवो: साम्नोर्यांवान्तर्यात् पूर्वं मादत्ते ऽथापोतस्मा-
द्विकृतं निधनं भवत्यविकारः पूर्वो ऽविकारादित्येक-
विंशानुकृत्यान्यैकविंशस्तोमं षोडशिनं करोति
तद् व्याख्यातं प्रथमे सप्तरात्रे ऽभ्यास उक्त उत्तरस्य
त्र्यहस्य बृहद्रथन्तरपृष्ठ्यचतुर्थस्याह्न एकविंशः षोडशी
पञ्चमस्याह्नः. पार्थश्च लोके चाकूपारं वाचेयं वेति
विचारयन्ति नानापुरुषकल्पौ स्यातामिति ह स्माह
मानतव्यो ऽन्य एवाकूपारं मरोचयिष्यतान्य आचेय
मावेयं वैनाभिरूपतरं पञ्चमे ऽहनि स्थानसम्मितं
सप्तममाला पञ्चय इति चतुर्थस्याह्नः शुद्धाशुद्धीयस्य
लोके चाकूपारं पञ्चमस्याह्नः पार्थस्याचेयं पार्थं चैव
नित्य मह. पार्थं व्याख्यात माचेयं नु खलु कुर्वत
एतयोरनुपशो भवति वृते हि पार्थं करिष्यन् भवति
चतुर्विंशं वधिष्यमानए सप्तदशस्तोमं वृतं करोति
तत्र न एवोऽवकीयानाए स्तोमं विचारयेत् सप्तदशे
वृते ॥ ११ ॥

॥ इति निदानसूत्रे षष्ठमः प्रपाठकः ॥

—

॥ अथ नवमः प्रपाठकः ॥

प्रतिष्ठाकामयज्ञ उत्तरः स खल्वेकाहस्ते व्याख्याता जनकसप्तरात्रे चत्वार्यहीनिकान्यहान्याहीनिकतन्त्राण्यनन्तरवा दुक्तरति षोडशिनं चतुर्थात् व्याख्यातं व्याख्याता अकांस्तेषां तदेवानुपूर्व्यं यत् त्रिरात्रे धर्त्ता इव इत्युक्तम एतासु स्वयोनिद्वितीयस्याह्नः सौभर मुकथानां ब्रह्मसाम कुर्यादिति धानञ्जय्यस्त्वेककुभं हि चतुर्थे करिष्यन् भवत्यौपगव मेवेति गौतमो ऽतिरात्रे सौभरं करिष्यन् भवत्येव मुभयो रनुग्रह इति षोडशिमती रात्रि रहीनन्यायेनाप्येव चतुष्टोमः षोडशिमानिति शौचिवृक्षिः शम्बूपुत्रो नात्र च नेति राणायनीपुत्रः पृष्ठाः स्तोम उत्तरस्य षडहो बृहद्रथन्तरपृष्ठ एव विश्वजिति हि पृष्ठानि करिष्यन् भवति चतुर्थस्याह्नः प्रत्यस्मै पिपीषत इति गौरीवितं षोडशिसाम विराजा मन्वपायं स्वराजोपेयुः पृष्ठापायाद्वेत्योपयन्ति तदेतद्धाढेंच्युत मेतद्धायत्रीसामेङ्कारवत् पर्शिधनं यथा रैवत्यो विपरिहरे दौच्छोरम्भे इति गौतम एव मिडारम्भयोर्वृहतीति न विपरिहरे दिति धानञ्जय्यो ऽपि ह्येव मजामि स किमर्थो नित्यं कल्पं

व्यावर्येदित्यष्टरात्रस्याषोडशिका रात्रिश्चातुष्टोमन्या-
येनाथापि कृतः षडहे षोडशीतरायुष्कामयज्ञ उत्तरः
स यज्ञवरात्रो नव प्राणा इति त्रिकद्रुकानुपदधाति
छन्दोमसादृश्याद्याप्येत जनस्य पूरयितारो षोड-
शिका रात्रिः स्तोमस्त्रावेणाषोडशिको ह्येवायुर्भव-
तीति पशुकामयज्ञ उत्तरस्तत्र . षडहं करोति
षाङ्क्ताः पशव इति यद् विश्वजितं पशूक्तानि पृष्ठा-
नीति त्रिकद्रुकानुपदधाति छन्दोमसादृश्याद्याप्येत
जनस्य पूरयितारस्तान् पुरस्तात् पञ्चाहस्य करोति
विश्वजितः हि रात्र्यापायाय करिष्यन् भवत्यायुषो
ऽनुष्टुभि बृहत्करोति त्र्यहे समं बृहद्रथन्तरे युयुक्ष-
माणो ऽजाम्यर्थं वैव स्यादार्कजम्बं वेति विचारय-
त्यथापि नैताः स्वतन्त्राः स्तोमविधा बृहदा-
पद्यते तत्राकूपारं तृचसमाप्तये तदेतन्नवमाह्ना-
गान्वितम् ॥ १ ॥

अथैष दशरात्रो बृहद्रथन्तरपृष्ठ एव तत्र खलु
विश्वजितं दशमं करोति स खलु विश्वजित् क्रिय-
माणो दशमतन्त्रं प्रत्यूहति तत् प्रत्यूह्यमानं पूर्वे
तन्त्रे प्रत्यूहयत्र यदेवैकं पुरा सप्तमे कृतं तन्त्रं भवति
तत्प्रच्यवते ऽथैते षष्ठ-नवमयोस्तन्त्रे व्यत्यस्यति षोड-

शाह्निकैरयं स्तोमैरभि विधीयते स त्रयस्त्रिंशं स्त्वतन्त्र मचिकीर्षीत् तस्येतरस्थानं परीतं भवत्यत्र खल्वयं सर्वो दशरात्रो नानातन्त्रो भवति समूहति वार्हद्रथन्तरपृष्ठ्याग्निरत्याभिरनित्यो ह मानाया मक-रिष्यदनित्यो ह्ययं दशरात्र इति नित्यासु चतुर्थ-पञ्चमयोर्जगत्यो यास्चतुर्थे नित्याः सप्तमे ऽहनि ताः करिष्यन् भवत्यतो नित्याः करोति तद्दशेन पञ्चमे कुशलं यदनित्यास्त्रिष्टुभो नित्यानित्या एवा-चिकीर्षौ द्विव्यपरं नित्ये ह तन्त्रे अनित्यौ सौमौ यत्र नित्यानित्या अभिरूपा यदु पृष्ठ उभयोरनित्या उभयं ह्येव तत्रानित्यं स्तोमस्यैव तन्त्रञ्च नित्यास्तु परयोरक्ष्णोर्नित्याभिर्न्नीतस्य द्वादशस्य समूढो नित्योऽस्तु नवमे ऽन्तर्विधा हि दाशमिक्यो विश्वजिदयन्तर्विधाः करिष्यन् भवति तत्र कुशलं यज्ज्योतिष्टोम्यौ करोति तन्त्रान्विते च पृष्ठान्विते चाथ खलु दीर्घतमसोऽर्कं सप्तमे ऽहनि करिष्यन् भवत्यन्तसामान्त इति तन्त्रस्य: स्वशिरामर्कः सप्तमे त्रय एवैको ऽग्नेरर्क-स्तन्त्रापेतस्तत्रनवम महद्दरति ॥ २ ॥

१ अथ द्रव्यसमुद्देशो यानि यथास्थानं व्याख्या-तानि तानि यान्ययथास्थानं तैरेवाष्टभिः पर्यायै-

स्तेपा मन्वयत् समन्वीचेत नाना ब्रह्मसामानि नाना-त्वार्थः श्येतनौधसवर्णानि वार्हद्रथन्तरपृष्ठान् नाना-ऽग्निष्टोमसामानि नानात्वार्थं ऐडानि भूयिष्ठानि करोति सामान्तस्य स्थानं तत्सामान्त मथार्थ्यय तृतीय-सवनसामान्तस्त मदिदर्शयिषोन्नानाच्छन्दस्येवं भूयो नानात्व मिति तानीमानि भवन्ति सप्तच्छन्दांऽसि नवाहं नानु भवन्ति तत्र ककुभं च विराजश्चोप-प्रयुङ्क्ते सा प्राध्यात्तानि कुशलं यद्वीच्चेण प्रयुङ्क्ते ऽग्न आयूंऽषि पवस इति प्रथमे ऽहनि करोति काश च्चेतो रिति शिशुः सद्योजा ऽयं भवति सैपाग्नेयी पविता ऽभिव्याहारा शुद्धार्थेऽभिरूपा ऽथापि ग्रश्वदिह्याग्नि-ष्टुतं तैत्तिरीया अधीयते सैपाग्निष्टुदनुग्रहाय स्यात् स्वादिष्ठा मार्भवीया सैपा स्वादुमती पठिताभिव्या-हारा शुद्धार्थे ऽभिरूपाथापैाकाहिकी भवत्यथ खल्वत्र पौष्कलं भवति स्युद्धास्तेतद्भवति यत् पुष्कल मित्यया-पैाकाह्निक मेकाहसमासं ग्रश्वदिह तैत्तिरीया अधीयते नाना मध्ये-निधनानि न दाशराचि-काणि मध्ये-निधनान्यनुभवन्त्यतश्छन्दस्यान्युपप्रयुङ्क्ते आ सोम स्वानो अद्रिभिरिति तृचीयस्य बृहती सप्तदशे साध्यासां करिष्य भवत्यत एतां करोत्येषा सामन्या

तृचप्रथमा तृतीयस्थानेति वभ्रवे ऽनु स्वतवस इति पङ्क्तृचं षष्ठ-सप्तमयोर्विहरति सत्त्वानार्थौ नवर्च मेतस्य प्रथमे ऽहनि तृचं कृत सुपार्श्वो गायता नर इति व्यस्यं सप्तमस्य समूढाज्य मेतत् स्थानसम्मितं छन्दसो उत्तरयो रेते रूपसम्पन्ने इत्येते रूपसम्पन्ने इति ॥ ३ ॥

अथैष कुसुरुविन्दस्तच खलु वृहद्रथन्तरे ते करोति राथन्तरबार्हता ह्येते स्तोमा इति कानि तन्त्राणीति दशरात्रस्तोमविकृत इत्येके द्वैपृष्ठ्याद् द्वे तन्त्रे स्याता मित्याचार्याः प्रथमद्वितीययोरिति शौचि-वृक्षिरते श्राहीनिके इति तदिदं प्रथमतन्त्रं प्रवतीभिः क्लृप्त मपरूप मन्यचोपक्रमाद् वारयिष्यत्स्तु भवति तस्य स्थाने ज्योतिष्टोमं करोति प्रथमस्य प्रथमं राथ-न्तरस्य राथन्तर मित्येकाहिके इति धानञ्जय्य एव मपर्वविलोप इति तन्विदं गोस्तंन मन्तविधाभिः क्लृप्त मपरूप मन्यचान्ताद्वारयिष्यत्स्तु भवति तस्य स्थाने द्वितीयतन्त्रं करोति द्वितीयस्य द्वितीयं बार्हतस्य बार्हत मिति स खलु दशमे-ऽहनि द्वितीयतंच सुहृत्य तस्य स्थाने ज्योतिष्टोमं करोत्येकाहतन्त्राद्वानि सुपजि-गमिषन्नुक्तो द्रव्यागमः समेषु सोमेपूभयोस्तंन्त्रयोः

पुनानां बृहतीं करोत्युभयोर्ह्येषा निरयेत्युष्णिक्ककुभौ वा अपि समाने भवत इत्यपरं द्विरात्रन्याय इवेह भवति द्वैतन्चेण द्वैपृष्ठ्येन तत्र द्वैरात्रिका उष्णिक्ककुभः करोत्यथ यत्र राथन्तरस्याह्नस्तृचार्थी भवति तद्यथाद्यस्तुर्यीरे व्याख्यातं तथा तत्र भवति बार्हतेष्वहस्सु यौक्ताश्व-हाविष्मते अग्निष्टोमेषु हाविष्मत मौच उक्थ्येषु मौच मुक्थ्यासामेति विभक्तान्युक्थ्यानि राथन्तराणि राथन्तरेषु बार्हतानि बार्हतेषु तदेवाकाणाद् स्थानं यद्यथराचि तयोः सत्त्वगतयोर्बार्हतस्य कविमन्तं पर्यासं करोति कालेय मच्छावाकसामाभिज्ञवन्यायेनैकविंशो ऽतिरात्रो य एकभतोमाना मुत्तमस्तस्य स्तोमान्वयी षोडशीत्यविचारमेकविंशः ॥ ४ ॥

अथैष छन्दोमवान् बृहद्रथन्तरपृष्ठ एव तत्र खलु विश्वजितं दशमं करोति स खलु विश्वजित् क्रियमाणश्छन्दोमान् प्रत्यूहति ते प्रत्यूह्यमानाः षष्ठमहः प्रच्यावयन्ति पृष्ठावलम्बस्य पञ्चाहः प्रथमस्याह्नः प्रत्नवद् बहिष्पवमानं पञ्चमस्याह्नो ऽसृग्रत प्र वाजिन इत्यनुरूप इति शाण्डिल्यायन उपरिष्टादिमं नवर्चं सावर्त्तयिष्यन् भवति कथ मक्तस्या-

वर्त्तनं स्यादिति नवाहयोगा इमा भवन्तीति धानञ्जय्यः कथ मसमापयिष्यन्नवाह नवाहयोगाः कुर्यादिति व्याख्यातः समूह श्रुतावान् वैश्वानर मिति होतुराज्यं वैश्वानरीयस्य स्थाने वैश्वानरीयं त्रैककुभे उत्तरयोरेते रूपसम्पन्ने इत्युद्धरति काखरथन्तर मजामि हि भवति तचैतत् सोमसामैव मिडारम्भणा बृहतीति गौरीवितापायात् पृथक् स्वाराणि करोति नाना साधुरहोन इति स यदेतान्येतानि रूपसम्पन्नानीति प्रथम माचेयं नमसोपहरयै तदु बृहद्योनि भार्हते ऽहनीति स्थानसम्मिते उत्तरे इत्येते रूपसम्पन्ने इति स्वाराणि चैदुभानि माध्यन्दिनान्याग्येतानि रूपसम्पन्नानीतैडानि जागतान्यार्भवान्यानीडामन्तायो हि छन्दोमा इति स यदेतान्येतानि राथन्तरवार्हतेडानीति नवमे ऽहनि दीर्घतमसोऽर्क मनुकल्पयन्त्येके ऽहन्नयिनेण स यदनुष्टुभ्येतदस्य समूढं वा न भवति तचाकूपारं त्वचसमाप्त्येऽथ येनानुकल्पयन्ति .बृहत्यां वानुरूपं मन्यमाना यथा वैतदग्नेऽर्कः सप्तमे ऽहनि कृताकृत इति समापद्यन्ते दशमे ऽहनि सामानि समूहद्राजजिद् द्विपदास्वनुगृह्णाति संयुक्त मेतेनाह्ना भवतीति॥ ५ ॥

कथं दशमधर्मा मानस मिति कर्त्तव्या इत्येके तद्दाहर्त्तीयत इत्यकर्त्तव्या इत्यपर मदशमं च लुब्धस्य दशरात्र इत्यथाप्यकृतेन विश्वजिता मानस मध्यशाययिष्यदथाप्यनुष्टुप्संयोजनात्ते जागत मिदं स्थानं भवत्यथापि सचोत्पादास्ते ऽहीनोऽयं भवतीत्यभिचर्यमाणयज्ञ उत्तरः स खल्वेकाहक्लृप्तस्ते व्याख्यातास्तस्य सवनभाजस्तोमाः समावभ्राजो वेति विचारयन्त्येवं सवनस्तोमाः समं प्रयुक्ता भविष्यन्तीत्युक्थ्यसंस्थं ज्योतिषं बृहत्पृष्ठ बार्हतं तस्य द्वितीयं हि स्थान मापन्न मिति तत्र यो द्रव्यविकार उक्थ्यत्वाच्च बृहत्पृष्ठत्वाच्च स भवत्यपि च समन्तं समन्तीकारायाथात एकादशरात्रो दशरात्रान्ता अहीनाः द्वादशाहप्रभृतीनि सत्राणि किं मेकं स्थान मन्तरीया मिति वैकादशरात्रं करोति पृष्ठ्यावलम्बस्य पञ्चाहः पृष्ठ्यस्तोमस्य षष्ठ महरिति पयसा षष्ठ मह रभ्या राजति स्व × × तां * पयोधापेरवं द्वे बृहत्यौ स्वरावुतौ बृहती † पुनः कावरथन्तरं स्वं लोक मित्यजाम्यर्थं व्याख्यातास्छन्दोमा दशमस्य स्थाने चतुष्टोमं करोति कस्य हेतोरिति छन्दोमस्य

---

* 'स्वरादुत'—इति ख।  † 'बृहतीति'—इति ख।

समेत्यग्निष्टोमस्यात्यग्निष्टोमए स उ च्छन्दो रथन्तरपृष्ठो ज्योतिष्टोमतंत्रो यथा दशम मर्हारिति ॥ ६ ॥

कथं दशमधर्मा मानसच्छन्दोमस्य छन्दोमवत्यग्निष्टोमस्यात्यग्निष्टोमए स उत्तररथन्तरपृष्ठो ज्योतिष्टोमः कथं दशमधर्मा मानस मित्यकर्त्तव्या इत्येके स्वेन नामधेयेनैकाह आशिष्यते चतुष्टोमो ऽग्निष्टोम इत्यथापि न दाशमिकं लिङ्गं दृश्यते यदेतद् वहिष्पवमानस्यावृत्तिः साम्नां विप्रच्यावन मनुष्टुभः परोक्षीचिकीर्षेति कर्त्तव्या इत्याचार्या ये ऽन्ये मानससंयुक्तेभ्यः सए्स्थापनीयं मानसं चतुष्टोमो ऽग्निष्टोम इत्यथाप्यक्लतेन विश्वजिता मानस मध्यशाययिष्यद्यापि सर्वोत्पादं नाहीनक्रतावचिकीर्षेद् दृश्यते तद्दशम मृते मानसात् तथा मानस मृते दशमान्न चैतद्दशमस्य यथाव्याख्यातं दशमसंयोगास्तु कर्त्तव्या एष आचार्यसमयो ऽथापि तन्न महद्व्राचे वलिष्ठं ब्रुवत उस्रा-स्वादिष्ठे दाशमिक्यौ दृश्येते अथापि स्थानेन भागागमेन तन्नोपधिना छन्दोम्येनेति स चैव चतुर्विंए्शो दाशमिकोऽन्ते दृश्यते यदेतत् स्वेन नामधेयेनैकाह आदिश्यत इति वहूधैकाहाः स्वेन नामधेयेनादिश्यन्ते यथैष एवाश्वत्रिराचे ऽभिप्लवे च

त्रिकद्रुका इत्यथैनां नाहीनिकतंत्रान् ब्रूमहे यथो एतन्न दाशमिकं लिङ्गं दृश्यत इति ब्रूमो यथाम्नातमस्थानं तु सामव्यूहस्य समूढो दशरात्रो दृश्यते च बहिष्पवमानस्य नावृत्तिरन्यासु चानुष्टुप्सु दशमतश्चं यथा त्रिककुभः ॥ ७ ॥

तत् किम्प्रभृतयोऽहीना इत्युक्थ्यप्रभृतय इति बहवास्तिस्रो मुहूर्त्तमात्रा अग्निष्टोमे स्तुतशस्त्रैर्नाभिधीयन्ते ता अद्यापि विधीयत इति शश्वदंग षोडशिप्रभृतय एव भवन्त्यथैष चतुर्थो भागः प्रथमं स्थानं लभते सर्वे भागा आप्यन्ते सर्वे भक्ता यः स पुराहीनो भवति सोऽद्याहीन इति शश्वदङ्गातिरात्रप्रभृतय एव भवन्ति सर्वं मादित्यचरित मभि विधीयत उभौ वर्णौ कृतकृतिरेवात ऊर्ध्वं शश्वदङ्ग द्विरात्रप्रभृतय एव भवन्ति द्वे पृष्ठे चर्यां लभते द्वयान्यहानि राथन्तरबार्हतानीति तदिदं बृहदतिरात्रे स्थानं तदद्य स्थानं लभत इति शश्वदङ्ग त्रिरात्रप्रभृतय एव भवन्त्येव मह्नांनो ऽहस्सवनभागाः स्वस्थानातिगावा चतुष्टुविति शश्वदंग चतूरात्रप्रभृतय एव भवन्त्यथैष चतुर्थो भागो ऽहर्भजते यथा पूर्वे भागा इति शश्वदङ्ग पञ्चरात्रप्रभृतय एव भवन्ति शुध्यत्सु हैतच्चतुर्थं महः

पञ्चमे ऽहनि रात्रिः सज्जत इति वा शश्वदङ्ग षड्-रात्रप्रभृतय एव भवन्त्यत्रैव चतुर्थो भागो भूयिष्ठभाग् भवति शश्वदंग सप्तरात्रप्रभृतय एव भवन्त्यासप्तान् नानात्वानि वर्त्तन्ते नाना साधुरहीन इति शश्वदं-गाष्टरात्रप्रभृतय एव भवन्ति शुध्यत्यु हैतत् सप्तम महरष्टमे ऽहनि रात्रिः सज्जत इति शश्वदंग नव-रात्रप्रभृतय एव भवन्त्यष्टरात्रे पुनरभ्युद्धृतेषु भागेषु जगत्यस्थाना भवति सात्यस्थानं लभत इति शश्वदंग दशरात्रप्रभृतय एव भवन्त्यतद्विपर्यांसं महर्नानात्वं यदष्टमं नाना साधुरहीन इति शश्वदंगैकादश-रात्रप्रभृतय एवं भवन्ति शुध्यत्यु हैतद् दशम मह रैकादशे ऽहनि रात्रिः सज्जत इति ॥ ८ ॥

अथाय' द्वादशाहोऽहीनो भवती३ सत्र मित्य-हीनो भवतीत्याहुरेके दीर्घेतेति भवत्यथापराहीनि-कान्यहानीत्याचक्षते दाशरात्रिकाण्यहान्यथापराह यद्गौरीवितेनाहीनानि शश्वदंग त्रिरात्रप्रभृतय एव भवन्त्येव मध्यमाङ्गो ऽह:सर्वभागाए स्वस्थाना रात्राव-नुष्टुबिति शश्वदंग चतूरात्रप्रभृतय एव भवन्त्य-थापराह यजमान मेवैतया वर्द्धयन्तीत्यथापि वैरूपे वदति यजमानं वा अनु प्रतितिष्ठन्त मुद्गाता प्रति-

तिष्ठतीत्यथाप्यस्मिन् दक्षिणाप्रवादो भवति ध्वस्रे वै पुरुषन्ती तरन्तपुरुमीढाभ्यां वैदर्श्विभ्याꣳ सहस्राण्यादित्सता मिति दक्षिणावन्तो ऽहीना इत्यथापि शश्वदनेनाध्वर्यवो याजमानं परिचक्षते यथाहीनेनेति सत्र मित्यपर मुभयतो ऽतिरात्रो भवत्यन्यतरतो ऽतिरात्रा अहीनाः समाहितप्रायणीयोदयनीयो भवति व्याहितप्रायणीयोदयनीया अहीना अथाप्यन्वहं गौरीवितो भवति नानाक्षरा अहीना अथाप्यस्मिन्त्सत्रवादरूपो भवति यो वै देवानां गृहपतिं वेद सञ्जे गृहपतिर्भवति भारद्वाजायना वै सत्र मासत स्तोमो युज्यते सत्रियेभ्यो ऽहभ्यः प्रतिष्ठायैव सत्र मासते ऽङ्गिरसो वै सत्र मासत गौपायनानां वै सत्र मासीनानां यतः सत्रादुदस्थाता३ स्थिता३ दित्युभयं भवतीति लामकायन उभयथा ब्राह्मणं भवत्युभयथेष्टं वेद यत उभयेषा मयं प्रत्ययं स्यादे ऽस्मिन्नहीनवादाः प्रत्ययस्थास्ते भवन्ति सत्रन्तु भवति सत्रकारो ऽस्य भवति नैवाहीनेन सत्र मित्यपरं यत्तद्यद्येत मिव ब्राह्मणं भवत्यन्यस्मै वै कामाय सत्र मन्यस्मै यज्ञो न तत् सत्रेणाप्नोति यदेकं यज्ञो न तद्यज्ञेनाप्नोति यदेकꣳ सत्र मिति तद्यथाश्वत्थो

वृद्धो नैवाश्वत्थ इति वदनायनो चनश्वत्थ इति चयो-ऽहीना इति धानञ्जय्य एकाहाहीनोऽहीनाहीनः सत्रा-हीन इत्ययं ज्योतिष्टोमो ऽतिरात्रः षोडशिमाने काहाहीनोऽत्र हि न किञ्चनैकाहिकं कर्म हीयत इति द्वादशाहो ऽहीनोऽत्र हि न किञ्चनाहीनिक मह-र्हीयत इति गवामयनए सत्र . महीनो ऽत्र हि न किञ्चन सात्रिक महर्हीयत इति तदिदं कुशली भृतयस्तस्मादहीना इति तदपि शश्वद् ब्राह्मणं भवद् दिष्ट मिति शाण्डिल्यायनो यस्य स्यादहीन इति यस्य तु स्यादहर्वर्त्तयेयेति द्विरात्रप्रभृतयस्तस्मादहीना इति तदपि शश्वद् ब्राह्मणं भवति प्रजापतिर्यज्ञक्रतून-सृजताग्निष्टोम मुक्थ्यए षोडशिन मतिरात्रं य एतै-र्द्विरात्रप्रभृतयो ऽस्वर्गण्या वुवन् तस्मान्नापि मह्यासी-रिति तस्मादेव ते ऽहीना इत्यहीना इति ॥ ६ ॥

अथातः सत्राणि तेषां द्वादशाहः प्रथमस्तस्मिन्नु-पक्लृप्तानि तत्र द्वे उपधिस्थाने अन्तरेणाग्निरात्रौ च दशरात्रञ्च यत्रैकैनाह्नार्थो भवति व्रत माहरेत्ये-तदेकार्थे दृष्ट मिति तत्र तदेव स्थानं यत्संवत्सरे द्व्यहार्थे गोआयुषी तयोस्तदेव स्थानं यत् संवत्सरे त्र्यहार्थे त्रिकद्रुकाएश्चतुरहार्थे व्रतचतुर्थान् पञ्चाहार्थे

ऽभिप्लवपञ्चाहए षडहार्थे ऽभिपवः सम्प्लवत एतेन न्यायेनैव * एकोत्तरकल्पः क्रमत आ चत्वारिंएश-द्रात्रा दुपचीयमानेष्वहस्सु रोहेणोपचयः प्रवर्त्तत एतए रात्रिसत्रन्याय इत्याचक्षते यदेवापवदति तद् व्याख्यास्याम स्तत्राभिए स्त्रयोदशरात्रे कथं व्यूह-समूहाविति समूढः स्यादित्येके समूढो ह्येनए सर्व-स्तोमो ऽन्ववैतीति व्यूढः स्यादिति गौतमो ऽनादिष्टः कल्पेन समूढो ऽथापि छन्दोयोगपर्वणि भागसमाप्ती चोपधीयते ऽथापि कृत्स्नो ऽयं दशरात्र इति व्यूढ मेवैनए सन्तए समूढः सर्वस्तोमो ऽन्ववैत्यथापि नादेष्यस्तोमसाम गौरीवित-वादेष्यत्कथं दशम-धर्मा मानस मित्यकर्त्तव्या इत्येके दशमश्च लुब्धय दशरात्र इति कर्त्तव्या इति गौतमो ऽनाकृतेन वृतेन मानस संप्रविश्याज्यते ऽथापि वाचो दशक्रमं मन उपक्षतं कृत्स्नोऽयं दशरात्र इति चतुर्दशरात्रे पह्राए रूढावृत्तं करोति सैषा मध्यावृत्तिर्यच्चातिरात्रात् पृष्ठ मुपयन्ति प्रथमस्याह्नो ऽस्य भक्ता मनुरूप इत्यजाम्यर्थो ऽथ खल्वत्र त्रयस्त्रिंएशे अहनी सन्निपततः केनाजा-मीत्यक्र एव सामान्यादपि वा कण्वरथन्तर मनु-

* "अभिप्लवन्यायेनैव"—इति ख।

कल्पयेत् पूर्वस्याह्न स्तामैव उत्तरस्य वा मध्यन्दिने पृष्ठ्या उत्तरस्य विषुवत्स्थानीयो वृतं पञ्चदशरात्रस्य पृष्ठ्य एवोत्तरस्य तत्राग्निष्टुत मुप दधाति सत्त्राये ब्रह्मस्थानवच्चिकीर्षँ्स्तस्याग्नि: प्रत्नेन जन्मनेति होतुराज्य मजाम्यर्थं व्याख्याता अन्यतो ऽतिरात्रः ॥ १० ॥

न्यायकृप्त मा सप्तदशरात्रात् सप्तदशरात्र ऽभिप्लवपञ्चाहः संप्लवेते ते खलु स्वतन्त्रा एव त्रिकद्रुकाः स्युरित्येके यावत् षट्तान्नेयुः षडेव सन्तस्तन्त्रास्याpादयेयु रित्यापादयितव्यँ्सन्त्राणि मन्यत इति गौतमो ऽहर्गणप्रत्यवायो ह्येव मभविष्यत् त्र्यहाद् द्व्यह मेव मिव ब्राह्मणं भवत्यनन्ता वा एता यत्पञ्चाहविधा इत्यन्ताहर्ह्यतः षष्ठ मुपैतीति स वै पञ्चाहतंत्र एवाभविष्यन्न षष्ठात् किञ्चित्प्रत्याहरिष्यदिति प्रत्याहरेदिति गौतम एव मिव ब्राह्मणं भवति पञ्चम ऽहनि षष्ठस्याह्नस्तृतीयसवनं प्रत्याहरति षडहाविलोपाय स त्वेव स्तोमो यः पञ्चमस्य सा सँ्स्था रथन्तरबृहत्पृष्ठाः पञ्चमस्याह्न एष प्रत्नानुरूप इत्यजाम्यर्थो व्यावृत्तये पृष्ठ्याभिप्लवयोः श्यैतनौधसब्रह्मसामा पौष्कलस्युध्यौष्णिहाभीवर्त्तसुज्ञानयो रन्वपायँ् स्वासु

भ्यैतनौधसे अभीवर्त्तकारिता हि प्रगाथा इत्ये-
तेनैवोत्तरे व्याख्याताः पाष्ठिकानि पञ्चमख्याङ्क
उक्थानि तत् कुशल मुद्धरति गूढं द्विपदा अन-तेना-
चिकीर्षीत् तचैतदैधावाव नवमादन्तान्वितं तद्य-
द्वेतासु यजिष्ठं त्वा ववृमह इत्येता आपन्नाः पञ्चम
मह्नर्भवन्तीति सौश्रवसं मारुतं वेति विचारयन्ति
वैभक्तए सोश्रवसं पाञ्चमिकं मारुत मथ यत्रा-
भिप्लवयो रात्रिसत्रेषु कथं कल्पविचारितानीत्य-
कर्त्तव्यानीति शौचिवृक्षिर्नान्यत्र संवत्सरानुसंवत्सर-
सम्मितासु च नेतिकर्त्तव्यानीति गौतमो यावन्ति
यावन्त्यभ्यसृवीतेति विहितान्यप्रतिषिद्धान्यथाप्येव
माम्नितरा संवत्सरश्चेति विएशतिरात्रे ह्यर्थे सति
विश्वजिदभिजितौ करोति कस्य हेतोरिति सम्पूर्णौ
विराजए सत् मुपक्रतं तावतौ वैरोजौ वा पञ्चसूक्तौः
स्तोमैः पृष्ठैरिति यद्वैव पृथगमात्मौ तौ पृष्ठ्यादनन्त-
रिताविति ॥ ११ ॥

पूर्वस्मिन्नेकविएशतिरात्रे तृतीयेऽभिप्लव आवृत्तो
भवतीः३ अनावृत्त इत्यनावृत्त इति शौचिवृक्षिर्न
ह्यावृत्तिर्विद्यायते ऽथापि कथए सप्ताहो विषुवानव्या-
दित्यावृत्त इति गौतमो रोहप्रत्यवरोहौ सत्र मुपक्रतो

विषुवानिति यद्वेतदनादिष्टावृत्ति रिति नाभिन्नवत्त्वा-
वृत्तिः क्वचनादिश्यतेऽर्थं एवावर्त्तयतीति यद्वेतत्
कथं सप्ताहो विषुवान्स्यादिति दृश्यते षडहो विषु
वत्स्थाने चतुर्दशरात्रे तथा सप्ताहः सत्सत्त्विन्त्य-
थापि यदनावृत्तोऽभविष्यदतिरात्रोऽभिन्नः षडहो
द्विरात्रो द्वावभिन्नवौ षडहा वतिरात्र इत्यभविष्य-
दिति रूढावृत्ताविति ततो नाना दिशत्युक्थ्या
नुत्तरस्मिन्स्वरसाम्नो नुवते पृष्ठ्योपधानात्तत् तान्येव
विधनानि यान्येकविंशत्यहस्कारिणां श्येतनौधस-
प्तसामानः स्वरसामानः पौष्कलश्चुध्यौ ग्राहा विषु-
वतः साम ह्यचय लोक आभोगव मभीवर्त्तो पाया-
च्छायन्त इव सूर्य मिति विकर्ण मिन्द्र क्रतोर पाया
न्यायक्लृप्त मा सत्सद्यः सत्सत्सु पृष्ठ्य विषुवत्-
स्थानीयं करोत्यनिरुक्तं च त्रयस्त्रिंशतं खलूत्तरस्य
त्र्यहस्य स्तोमैरभि विधत्ते वै विषुवतीय मत्याधि-
रसन्त्स एष आवृत्तः स्तोम. पूर्वस्याहो ऽनुपूर्वस्तोम
उत्तर एतं विशालः पृष्ठ्य इत्याचक्षते पृष्ठ्यस्तोमं पुर-
स्ताच्चोपरिष्टाच्चरूढावृत्तामनिरुक्तं सप्तमं मात्रा सम्पूर-
णायैकाहं ततानुष्टुभिबृहत्कगौत्यजाम्यर्थौ ऽथापि
व्रतस्थानो भवत्यौपोत्तमादुभयसामवतमिति ॥ १२ ॥

न्यायक्लृप्त मा चयस्त्रिवृद्राचान्तपञ्चाहविहितं तत्कतमोऽयं पञ्चाह इति पृष्ठास्तोमः पञ्चाह इति कापटवो ऽनादेशे क मन्यं प्रतीयामो ऽथापि यत्र-यत्र चैकाहिको भवत्यादिशत्येवैनं तत्र-तत्रा ऽथाप्याह नाना ब्रह्मसामान्युपयन्तीत्येष नाना ब्रह्मसामा भवत्यथापि दाशरात्रिकैः स्तोमैः पञ्चाहान् संवर्ग-यन्ति पृष्ठास्तोमपञ्चाहस्यादेवा ऽथाप्याह त्रिवृता प्रयन्ति त्रिवृतोद्यन्तीति त्रिवृत् प्रथमं दाशरात्रिकं तदेवावृत्तमोदयनीयं भवत्यथापि विश्वजिता जा-नोमो विश्वजिद्वत पृष्ठावितानमवैतीति स वै नून मभ्यासको ऽभ्यासको ह्यहीनेष्वनभ्यासकान्तु मन्यामहे न हि विज्ञायते ऽभ्यासङ्ग इत्यभिप्लवपञ्चाह इति गौतम आदिष्टः कल्पेन भवत्यथापि न पृष्ठ-पञ्चाहः कुतोऽकृतो विश्वजितेन पृष्ठास्तोमपञ्चाहो ऽभिप्लवपञ्चाहस्तु विद्यते तं कृतवदतिक्रामत्यथापि कृत्स्नादेव पृष्ठास्तोमो नाभिप्रयोगं लभेत कुतो विलुप्तौ लभेयाता मित्यथापि गवदेके ऽध्वर्यवो ऽभि-प्लवपञ्चाह मादिशन्त्यथापि कालबविनो व्यूहेनाटि-ग्रन्थ्यतिरात्रो ज्योतिर्गौरायुः पञ्चाहः स द्वितीयः स तृतीया विश्वजिदतिरात्र इति यदेतदनादेश इत्या-

देशजातिरेषा भवति यदधिकारो यदेतद्यत्र-यत्र चैकाहकी भवत्यादिशत्येवैनं तत्र-तत्रेति पृष्ठास्तोम-पञ्चाहो वा अयादिश्यते पृष्ठ्यावलम्ब उत्तरे नव-रात्रे छन्दोमवति दशरात्र इति यदेतन्नाना ब्रह्म-सामन्युपयन्तीति कारणकारित मेतद्भवति यदेतद्दा-शरात्रिकैरहोभिः पञ्चाहात्संवर्णयन्तीति सद्भाभि-प्राय एतदाह द्वौ पञ्चाहौ दशरात्र इति यदेतत् त्रिवृता प्रयन्ति त्रिवृतोद्यन्तीत्युत्तम एतत् त्रयस्त्रिंश-शद्रात्रे ऽभिनन्दाब्राह्मणं वदति त्रयः पञ्चाहाः पुर-स्तात् त्रय उपरिष्टादिति यदेतद्विश्वजिता जानीम इति नेह पृष्ठ्यार्थेन विश्वजिता गच्छति॰ विषुवदर्थेनैष आगच्छतीति नाना ब्रह्मसामान्युपयन्तीति यद्दै पृष्ठ्या-योरनुव्यत्ययं श्यैतनौधसे व्यत्यहरिष्यद्भूयान् व्यत्यय आकाङ्क्षो ऽभविष्यत् प्रतिपदा माज्याना मौष्णिहयो रिति श्यैतनौधसवर्णानि वार्हद्रथन्तरपृष्ठ्याद्यदु विश्व-जितं विषुवन्त मितो यदपैति तस्यैतस्मिन्ननुग्रह इति ॥ १३ ॥

॥ इति निदानसूत्रे नवमः प्रपाठकः ॥

---

॰ "विश्वजितागच्छति -इति च।

## ॥ अथ दशमः प्रपाठकः ॥

अग्निर्मूर्द्धा दिवः ककुदित्युक्थप्रणये करोति कस्य हेतोरिति सामान्या मूर्द्धन्वती वैषुवतीयेऽभिक्लृप्या तच्चैतत्सत्रासाहीय मापन्नञ्च विश्वजित मपि च वैषुवतीयं विषुवस्युभे षोडशिसामनी करोति वैषुवतीय मन्यार्वित्सनुत्तमः पञ्चाह आवृत्तो भवतीश् अनावृत्त इति तद्व्याख्यातं पूर्वस्मिन्नेकविंशतिरात्रे सप्त मासत उत्तरं तचैते सामस्य निदधात्येकविंशतिरात्रञ्च द्वादशाहं चैते नानात्वक्लृप्ते इति पश्चाहक्लृप्त मुत्तमं प्रथमे विपर्ययुक्ताः पञ्चोऽहा स्त पञ्चाहानेव करवाण्येवं पक्षसोः समाधिरिति तत्र कथं वृहद्रथन्तरे इति यथालोक मेव न हीह तद् ब्राह्मण मिति कथ मु ब्रह्मसामनीति श्यैतनौधसे एव न हीह तद् ब्राह्मण मिति यस्य तु स्यात् स एवायं पश्चाह इति तथैव तस्य वृहद्रथन्तरे तथा ब्रह्मसामनीति ते चेद्यथालोक वृहद्रथन्तराः प्रथमस्य प्रथमस्याङ्ग एष प्रज्ञानुरूप इत्यजाम्यर्थी यद्यु वा अयथालोक वृहद्रथन्तराः प्रथम एवायोपरिष्टाद्यद्यु ह यथालोक वृहद्रथन्तरा उत्तरे वृहन्निधनं वार्वाजस्य मनुकल्पयेद्यद्यु वा अयथालोक वृहद्रथन्तरा उत्तम

एवा ऽथ खल्वाह यद्विश्वजिति छन्दोमानुपयन्तीति कथंदं ब्राह्मणं स्यादिति षाडहिकानां समस्तानामिति चतुरात्रता मिति छन्दसा मिति त्रिवृता प्रयन्ति त्रिवृतोद्यन्तीति त्रयः पञ्चाहाः पुरस्तात त्रय उपरिष्टादिति न्यायक्लृप्त मा विधृतिभ्यो न्यायक्लृप्त मा विधृतिभ्यः ॥ १ ॥

अथैता विधृतयो भूतानां विधारिरवस्त्वैतान-प्गणान् करोति त्र्यहं षडहं दशाहं द्वादशाह मिति तानतिराचैर्विधारयत्येवं सर्व मेव विधृतं भविष्यतीति कानि तस्माणीति दशरात्रस्तोमविक्लत इत्येके ज्योतिष्टोम इति शौचिवृक्षिरनादेशे क मन्यं प्रतीयासौ ऽथाप्याह ज्योतिष्टोमव्यायनेन यन्तीति शतसंवत्सरे ज्योतिष्टोमायनेन यन्तीति वैतदवोचदिति कौसुरु-बिन्दे इति गौतम एतेन कल्पेनादिष्टे भवत इष्टो·तद-भिरूपतरं यथो चाहीने सर्वे ह्येव समासो ऽभिरूपतरो यथो चाहीन इति व्याख्यातानि सन्निपामाख्येवं चेत् सन्निपाम स्यात् कौत्सस्य लोक उद्गाशौय मेतेने-डाकामस्य सिध्यत्यजामिकल्पस्येति तद्यदेताख्या रवा विशन्विन्दय इतोऽता राचैर्विक्लतौ दृष्टा इति नित्यासु वैति विचारयन्त्यर्थकारित मुद्गाशौयं स किमर्थो

नित्याश्रावयेदिति पञ्चदशानां दशमस्य नानदꣳ षोडशिसामैवं छन्दसा मनन्तरं यक्तु सन्धिषामैव भवत्यथौशनकावे समाचारश्चिष्यद्यथा रथन्तर मपचित्या रथन्तरꣳ सञ्चरते ऽथापि कावं तृतीयसवनेन समधिचारयियौक्तइशेनौशन तचैते वैश्वज्योतिषवासिष्ठे अपुरस्तात्स्तोभे पदानुस्वारे यद्यौशनकावे एकविꣳशिष्वकान् करोत्यन्तर्पयिणो हि स यन्नवमप्रभृतिष्वन्तर्पयिस्वादेवायाप्येते सप्तमप्रभृतिषु दशरात्रे दृष्टा उपपन्नं द्वादशाहे नवमप्रभृतिषु प्रयुञ्ज्येरन्निति कावस्यर्षु दीर्घतमसोऽर्को एतासाꣳ हि स्थान मापन्ने द्वादशे ऽहन्युत्सेधनिषेधौ करोति दशमादन्तान्वितौ यमातिरात्रास्त्वादित्याना मष्टावतिरात्रान् करोत्यष्टौ यमा आदित्या इत्यादितरानां द्वन्द्वदर्शनादभिप्लवातिरात्राणां द्वन्द्वानि करोत्यय खल्वायुस्तोमे ह्यभिजिति वाजामिकल्पे सौभरं करोति तत् खलु हारिवर्णास्यर्षु करोत्ये तासाꣳ हि स्थान मापन्न मिति ॥ २ ॥

अथैता आञ्जनाभ्यञ्जनाः प्रजापतीप्सा मुपक्रतास्तत्र सर्वस्तोम मुपहारयेत्येषो ऽस्य सोमतः सꣳस्थातः पृष्ठस इति तद् यत् षड्विꣳशस्थान मेव

मपर्वविलोप इत्युत्तमावभिन्नवा वावृत्तौ भवता३ अनावृत्तावित्यनावृत्ताविति शौचिवृक्षिर्न ह्यावृत्तिर्विज्ञायते ऽथाप्यमध्ये सर्वस्तोमो मध्यस्थानो विषुवानित्यावृत्ताविति गौतमः प्रतिष्ठाकामसत्र एतस्मिन्स्थाने क्लृप्तं करिष्यन् भवति नैतदन्यत्र मध्याद्दान्तो भवतीति यद्येतदनादिष्टावृत्तिरिति नाभिन्नवस्यावृत्तिः क्वचनादिश्यते ऽर्थ एवावर्त्तयतीति यद्येतदमध्ये सर्वस्तोम इत्यपर्वविलोपायैतद्भवति मध्यामध्यामध्ये विषुवन्तं यथा त्रयोदशरात्रे सꣳसत्स्विरि संवत्सरसम्मितासु प्रायणीये चतुर्विꣳशं प्रतिषिध्यत स्तं त्रिवृदेव कार्यमित्याह निष्पन्नचोदितत्वादेतद्पूर्वं प्रायणीयं चेति स्तोमविकार मेके तथैवाधिकाराच्चतुर्विꣳशं त्वेव कार्यमिति निष्ठा तथा हि ब्राह्मणं ता एताः संवत्सराप्ति मुपक्लृप्तास्तत्र यदेतान्यहान्येवꣳ संवत्सरस्य प्रयुक्ततमान्यहानि भविष्यन्तीति तृतीये ऽभिन्नत्र इषोवृधीये समन्ते कुर्या३न्न कुर्या३दिति न कुर्यादित्याहुः पृष्ठ्यसान्निपातिके इमे भवतो न चेह पृष्ठ्या भवतीति कुर्यादित्यपरं नाना पर्वणोरिमे सन्तानार्थे भवतो नानापर्वणोरेवैते अहर्गणस्यैकाहस्य भूयसा चैवꣳ सांवत्सरिकाणां

द्रव्याणा मविप्रयोगो भवत्यथाप्यत्र विश्वजिदभि-
जित्सन्निपातो भवत्येतौ च पृष्ठासदृशावित्यावृत्ते
ऽभिप्लवे कतमत्स्वन्तनि कुर्यादिति यास्त्र मित्येक एतदे-
कार्थे दृष्ट मथाप्येतदेषा मावृताना मन्ते भवति
मध्योदाय मिदᳫ सच मित्यपत्य मित्यपर मेवं पुर-
स्ताच्छन्दोमानां ह्यव्युक्तानि भवन्ति सन्तनीत्यपर
मेतद् येषा माद्यं भवत्यसम्प्राप्तेरन्ततो लोपः श्याक्षर-
वर्णं मित्यपर मेतदेषा मक्तनं भवत्यथाप्येवᳫ सम्प्रा-
पीयं भूयः सांवत्सरिकं द्रव्य मनुगृह्णत इति ॥ ३ ॥

प्रजातिकामसत्र मुत्तरं तत्र नवाहान्करोति
न्यूनात्प्रजाति मिति षडभिप्लवश्च सप्तस्वेदᳫ स्थानᳫ
स चतुरभिप्लवता मनतिचिक्रमिषन्नेतानेव षडहा-
नसंव्युह्य चतुरो नवाहान् करोत्यथ खल्वत्र भाग-
स्तोमान् करोत्येते या न दृष्टा इति तेषां यदेवंविधः
सᳫख्यायोग एव मुभे रूपे षडहरूपञ्च ककुब्रूपञ्चाथा-
पीयं तावत्यः सᳫख्या यथा पञ्चा मभिप्लवाना मित्यु-
त्तरयज्ञं यो विधृतिषु दशरात्रे त्र्यहान् करिष्यन्
भवति राथन्तरेणाह्ना निवृतः प्रतिपद्यते वार्हतेन
पञ्चदशान् राथन्तरेण सप्तदशान् वार्हतेनैकविᳫ-
शानन्यमेतावद्यापल्लन व्यत्यासः कुशलेनोपपद्यत

इति प्रतिष्टाकामसत्र मुत्तरं तदाज्ञनाध्यज्ञनाभिव्याख्यातं न्यायक्लृप्त मेकषष्टिरात्रा एवैतदेकषष्टिरात्रं संवत्सरसम्मितास्थान मेव तत्र नवाह मभितः पृष्ठ्यौ करोत्येवं सर्वं सांवत्सरिकं द्रव्य मनुगृह्यत इति ॥ ४ ॥

अथ केनासंस्तीर्णान्यभि विदधीतेऽतिरात्रैसत्रन्यायेनेत्याहुर्यथा शतरात्र मिरयपि वा दशरात्रस्त्र ब्रतं चान्ते निधाय यत् सांवत्सरिकाणा मह्नां समवहारः सिद्ध्येत्तथा कल्पं कुर्वीत यथा संवत्सरसम्मितास्वपि वा यत्र भागस्तोमानां समविभागः सिध्येत्तस्य कल्पं कुर्वीत यथा सवितुः ककुप्सु ज्योतिष्टोमेन वैष जनस्य पूरयितेऽथ प्रायणीयोदयनीययोरतिरात्रयोरादिशत्येकत्र षोडशिनं नैकत्र तत्कथं स्यात् षोडशीति यथा विराट्सम्पदं सम्पत्समानां मन्येत तथा कल्पं कुर्वीत द्वादशाहस्य च गवामयनस्य विराट्सम्पदं षोडश्युपक्रतेऽथानुपपद्यमानायां प्रकृतौ निर्णीय यथा मन्येत तथा संस्थयेषु प्रतिपादयेत्तेषां यानि रात्रिसत्रन्यायेन वर्त्तन्ते षोडशिमन्तौ तत् यथा द्वादशाहेऽथ यत्र रोहप्रत्यवरोहौ सत्र मुपक्रतमषोडशिकौ तत्र यथा

गवामयने यत्रानुमध्यं षोडशिकी यत्र यचो न दृश्येत षोडशिमन्तौ तत्र तत्र कार्त्स्न्यायापि वा चतुष्टोमेष्वषोडशिकौ सर्वस्तोमेषु षोडशिमन्ताविति षोडशिमन्ताविति ॥ ५ ॥

अथातः सांवत्सरिकाणि तेषां यद्गवामयनेन सामेति व्याख्यातं तद्यदपवदति व्यावृत्त्यर्थं वा तदपि ब्राह्मणेनैव कारणं वदति तत्रादित्यानामयन उद्भिद्बलभिदौ मासासम्पूरणाय करोति तचैक इन्द्रक्रतावुत्सेधनिषेधौ कुर्वन्त्येष औत्तरपाचिक इति तत्र निन्दा यत् षट् प्रगाथा भवन्त्यष्टौ प्रागाथिकानीति यथासमाम्नायन्त्वेवैवं पक्षसोः समाधिरिति पञ्चदशत्रिवृतश्च सुपदिते गोआयुषी ते पञ्चदशत्रिविर्शा प्राचिक्रमेषोछन्दोमस्तोमं दशरात्रं करोति पशुका छन्दोमा इति तस्यान्ते चतुर्विंशे सन्निपतन्तस्तत्र पञ्चविंशं करोति नानात्वार्थः स उ चतुर्विंश एव भवति चतुर्विंशो ह्येवैष ऐकाहिकप्रसुत इत्यालोभाद् बृहद्रथन्तरे पृष्ठे अथापि स्तोमच्छाचेगायाथ्येवं तावन्तः पृष्ठोपाया यथा गवामयने समूहति बार्हद्रथन्तरपृष्ठावुद्धरति षोडशिनं चतुर्थादिराजा मन्वपायं स्वराजोपेयुः स्तोमस्य वा

लोभादन्यथापि यद्यु हैन मेकविंशं मकरिष्य दम-यिष्यच्छन्दोम्याद्यदि छन्दोम मैकविंश्यान्न वैक मेकविंशे क्रतावनेकविंशस्तथेह भवतीत्यथाप्येवं तावन्तः प्राङ्मुपाया यथा गवामयने ऽथाप्येवं पञ्च-दशसप्तदशरात्रश्च सिध्यति षट् स्तोत्रीयाः पञ्च-दश मतिरिच्यन्ते त्रीण्यच सन्तनीत्येकप्रस्तावानि तेभ्यः षट् प्रस्तावा लुप्यन्त एव मेया पञ्चदशसम्पत् सिध्यतीति ॥ ६ ॥

दशमञ्च चतुश्चिंश मेके ऽग्निष्टोमसाम कुर्वते छन्दोमतायै चतुर्विंश मेक एकाहस्तोमो भवतीति त्रयस्त्रिंशन्त्वेव स्यात् क्रियमाणे ह्येवैतस्मिन् पुरा छन्दोमस्तोम मेतदहर्भवतीति यथाभूयस्त्वेनाथाप्याह चत्वारश्छन्दोमा इत्येष एव संशय एकस्तोमेषु द्वादशाहेषु सर्व एव द्वादशाहो विकृतः स्यादित्येके द्वादशाहे च क्रियमाणे किमर्थो ऽवयवं प्रतीया-दिति कृतप्रमाणाः संशया भवन्तीत्यपरं ते पश्चा-मोऽन्यावतिरात्रौ कृत्वाहाभिजिद्-द्वादशाहो विश्व-जिद्-द्वादशाह इत्यथापि नानापदि रात्रेः ससन्धि-कायाः स्तोमविकारो विद्यते स कथं संशयेषु प्रतीयेताथापि महत्सु स्तोमेषु सन्धिस्तोत्रीयान् प्रत्य-

कल्पयिष्यदथैतेन सर्व एकस्तोमा व्याख्याता अप्यहीनेष्वथ षोडश्येकविꣳशस्तोमो वा स्यादपि वा ये प्राक् त्रिणवत्रयस्त्रिꣳशाभ्या महस्तोमं तेष्वन्विया-देकविꣳश मुत्तरेष्विति तौ खल्विमौ द्वादशरात्रौ भवत उभयत्राह दशमधर्मा मानसे तु विचारयन्ति पूर्वस्मिन्निष्येके एषो ऽयुक्स्तोमो विकृतो नानापृष्ठे धर्मोत्युत्तरस्मिन्नित्यपर मेष स्यानस्यो ऽथापीदं यद्-नाम मेतदग्नो ऽभिरूप मथापीत्वं व्रतस्य मानसस्य चाव्यथायो भवत्यथापीत्वं त्रिवृत्-पञ्चदश-स्पदश-रात्रयोः सिध्यत्यथापि यत् पूर्वस्मिन्नकरिष्यद्बहुना कृतेन मानस मध्यशाययिष्यदथापि यत् पूर्वस्माद्द-शरात्राद् बहूपैति तथैतस्मिन्ननुग्रह इत्यन्न चायूꣳषि पवस इत्युत्तरस्य दशरात्रे करोति कस्य हेतोरिति शिशुंत्सत्र मिदं भवति सेयाग्नेयी पठिताभिव्याहारा शुद्धार्थे ऽभिरूपाथाप्यान्नेय्य श्चाङ्गिरसः सैवाङ्गिरसौ देवतेति ॥ ७ ॥

प्रतिष्ठाकामसत्र मुत्तरं तत्र षाड़हिकान् मास-भाजो रुद्रावृत्तान्निदधात्येवꣳ सिद्धौ रोहप्रत्यव-रोहाविति व्याख्यातं व्रतं विषुवाꣳस्तचोक्त मयने-ष्वपि पृष्ठास्तोमो विहृतः स्यादित्यथापुदाहरन्ति

यज्ञसमासं उत्तरं तच्चैतानि व्युदितानि स्थानान्यति-रात्रः शौनासीर्यो मासो दशरात्रो महाव्रत मिति कर्त्तव्यानीत्येक एष सत्रन्याय इत्याकर्त्तव्यानीत्यपर मेवं पुराणं वेदयन्ते ऽथाप्यनादिष्टः प्रायणीयो व्यूहेन भवति तत्र यत् पुरस्तादतिरात्र मकरिष्यं लुप्तो रोहो ऽभविष्यदपि च सुत्याए हविर्यज्ञा व्यव-यिष्यन्निति यज्ञसमासत्वाद्धोत्रासमासो हविर्यज्ञ-मक्रमत्वाद्दस्तकौञ्चमसैर्भञ्जयन्त्यथ,खल्वथ द्वौ गृह-पती सन्निपाततो होत्राध्वर्य्यवेनैकेन सुवर्त्तयेे इव स एष वृत्यर्थ एव द्वितीयः स यद्गृहपतिरेतद्गणस्थान मिति स्वर्गकामसत्र मुत्तरं तत्र संवत्सराभिप्रयोगो भवत्येवं यज्ञतपसोरभिवृद्धिरिति तत्रोक्त मय-नेषु तेषां यान्येकाहैर्वर्त्तन्ते गौरीवितानि तानि यानि नानाहोभिः सगौरीवितानि नानाह्ना हि सन्तानार्थं गौरीवित मित्यथ पुरुषस्य नारायण-स्थायने विश्वजिद्देवोभयोः पक्षसोः स्थादितोऽक्त एवं पक्षसोः समाधिरिति यथासमाम्नायन्त्वेवैव मवि-लोप इत्यथैतेषु दशसु विचारयन्ति कानीमान्यहानि स्युरिति ज्योतिष्टोम इत्येक एषो ऽविकृतः * पुर-

* 'एष विकृत"—इति ख।

स्तात्, भवन्त्यनापन्नान्येतानि पृष्ठानि ज्योतिष्टोम मित्यपरं पृष्ठं गच्छमाणा महद्गृह्णीयादिति ॥ ८ ॥

अथैतच्चुल्लकतापश्चित मित्याचक्षते चत्वारो दीक्षा मासाश्चत्वार औपसदाश्चत्वारः सौत्यास्तस्य कल्पो गवामयनस्य प्रथमोत्तमौ पूर्वस्य पक्षसोमांसौ स्यातां तथान्तस्याऽथैतन् महातापश्चित मित्याचक्षते चत्वारो दीक्षाः संवत्सराश्चत्वार औपसदाश्चत्वारः सौत्यास्तस्य कल्पो गवामेवायनं चतुष्वेषु रपि वैतस्यैव पक्षसो अभिवृद्धे स्यातां नयोविंशतिरयनमासाः पूर्वे पक्षसि षड्विंशति रुत्तरेऽपि वैतान्येव प्रथमानि चत्वारि समस्येद्यथा त्रीणि संवत्सर इत्यपि वा ज्योतिष्टोमायन मेव कुर्वीरन्नेतेषां यम्मान्येरण्हादपि वा यथा गवसंवत्सरायां तथा कल्पं कुर्वीताऽथैतच्छाक्ष्यानाः षट्त्रिंशत्संवत्सरं तस्य पुरोडाश मन्नसंपुरोधाद्यन्तःपुरुषस्तदन्नदास्य देवतेति ते यन्माण्समया वा स्यामाकमया वीमे चापन्ने हविष्ट मित्यथैतानि महासत्राणि देवाना मेव दीर्घायुषो देवा इति मनुष्याणा मपि सिद्धानि स्युरित्यपरं बहवः सन्निविश्य सनुयुः पुत्राः पौत्राः प्रपौत्रा इति तानि खल्वतिरात्राख्यविषुवत्कान्यूर्ध्वायनानीमानि भवन्ति

तत्र यदतिरात्रं वा विषुवन्तं वा करिष्यंल्लुब्धो रोहो ऽभविष्यद्यथापि न कल्पेनादेशो विज्ञायते नु ब्राह्मणेनाग्रायणं पुराणं वेदयन्ते ऽधाय्यादेकविंशोऽन्ततः स्तोमानां भवतीति शतसंवत्सरे ऽनतिरात्रश्चैव सत इत्यथैतदग्नेः सहस्रसाव्यं परमा विराज मुपक्लृप्त मपि वा सहस्रसंवत्सरेष्वा मेवोपक्लृप्तं स्यात्तच्चोक्त मयनेषु ॥ ८ ॥

स्वर्गकामः सत्र मुत्तरं तद्यत्सारस्वत मेषा स्वर्गाप्त्या भवतीत्यथैषा ऽग्नये कामायेष्टिः पृष्ठ्यमनार्थेनैव भवत्यथ खल्वाह तथा मश्वाञ्च पुरीषी च धेनुके दत्त्वेति केभ्यो दद्युरिति प्रसर्पकेभ्य इत्येके दृश्यते च प्रसर्पकेभ्यो दान मथापि व्रात्यस्तोमेष्वनृत्विग्भ्यो ददातीति पृथगेवेतरेतरस्या इत्यपरं कर्तृभिः संयुक्ताः क्रतुदक्षिणा भवन्ति तत्रातपनिवर्त्यमाने किमर्थो ऽवयवं प्रतीयादित्यरुणायां क्लृप्ता मुदवसानीयाभिरिष्टिभिर्यजेरन्निति गौतम एव मुदक्लृप्तं कर्म भवत्ययमेषा लोकोक्ता भवतीति सारस्वते एवोत्तरे कुशलं यत्सन्ततस्तुत्ये त्रिवृत्पञ्चदश मिन्द्राग्न्योरयन मेताविन्द्राग्न्योर्भक्ती इति यज्ञायायुषी इन्द्रकुक्षी समाये चापि चैता मध्या-

मत्याधिस्विवृत्पञ्चदशयोरिति विकद्रुकाक्लृप्त मुत्त-
सथैतेऽयने दृष्ट इति यदु विश्वजिदभिजिताविन्द्र-
कुत्सौ समाये चापि ताभ्या मत्याधिस्विकद्रुकाणा
मिति ॥ १० ॥

अथैतद् दार्षद्वृतए स्वर्गकामायनं तथैते पुरश्च-
रणे गौपाल्यञ्चाग्नौध्रनञ्च दीक्षाभ्यः प्रति गौपाल्य
मुपसद्भ्योऽग्नीध्रनए स यदृत्विजो वाचार्यस्य वैतौ
स्थानिनौ गुरु तयोः प्रैषचरण मभिरूपं तदेव
मनुष्येभ्यस्तिरो भवतीति तत एवारण्य माविशेन्न
पुनर्ग्राम माव्रजेदिति स्वर्गं लोक माक्रमत इत्येके
वाऽऽवर्त्तते श्रेयान् भवतीति वा ऽथैतत्सौर मिष्टा-
यनए स्वर्गकामाय त मेवाभिरूपं तदेव संवत्सरसु-
त्यान्नेदीयस्या माचर्यैप्सीत् किमथं उ तदिति
सासुज्यए स्यादित्यननुभूतिजए स्यादिति सिद्धिदर्शी
वा स्यात् सिध्यति वै खलु संवत्सरसुत्याया इष्टा-
यनेनाप्तिस्तत्रापि सुत्या देवता भवन्ति यावदेव
मर्थरूपस्यादीचितः कृष्णाजिनं प्रति मुञ्चते नव-
नीतेनाङ्गान्यभ्यङ्क्ते दीक्षारूप मेतद्भवति वाऽऽखरता
इष्टय इष्ट्यन्तं वा पश्वन्तं वा सोमान्तं वा कुर्वीते-
त्युभयोः पृष्ठशमनरूप मेतद्भवति ॥ ११ ॥

सर्पसत्रे किं मयनं स्यादिति गवामयनं स्तोमविकृत इत्येके ऽनादिष्टान्यहानि व्यूहेन भवन्ति संवत्सर चादिश्यते तत्र किमर्थो ऽव्ययं प्रतीयादित्यथापि विषुवदादेशेन रोहप्रत्यवरोहौ गवामयनो त्पादावेतौ भवतो ऽथापराह पण्डकुपण्डावाभिगरापगराविति वृते ऽभिगरापगरौ भवतः कौसुरुविन्दे इति गौतम एते कल्पे ऽनादिष्टे भवतो यद्देतदनादेश इत्यादिष्टे कल्पे न* भवतो यद्देतद्विषुवतादेशेन रोहप्रत्यवरोहाविति दृश्यते विषुवानेतयोस्तन्वयोऽर्हति वातवतो रयने तथा रोहप्रत्यवरोहाविति यद्देतत् पण्डकुपण्डावभिगरापगरावित्यन्यत्र सतो रवद्दिष्यदपि वेहोपासक्तयोरपि वा वचनादभिगरापगरौ स्यातां तत् खलु रूढप्रत्यवरूढं ततो विषुवानिति व्याख्यातानि सर्पसामानि विषुवति सर्पसामानि कल्पसप्रायाणीति तेषां यद्देव मानुपूर्व्यं निधनान्येषा मादित्यस्तेषा मुपक्लृप्तानि तेषा मेव मानुपूर्व्यं मथापेरषा मेतद्गणनिधनं तत् त्रिणिधनानुग्रहाय माध्यन्दिने ऽत्रिकोर्पीदानुपूर्व्यमितरे ॥ १२ ॥

---

* ख-पुस्तके 'न'-इति पदं नास्ति।

अथैते गौषूक्ताश्वसूक्ते भाजाभाजयोः स्थाने स-
माये चापि वैनयोर्ज्योतिः समाये निधने यथा भाजा-
भाजयोरिति दशिनए स्तोमं करोति दएशुकाः सर्वा
इति द्वादशं विषुवन्त मित्याधिस्त्वन्नथापि शश्वद्
द्वादशौ विषसेचनौ नाम सर्पाणां दन्तौ भवतस्तद्रूपं
विषुवत्यचिकीर्षीत् प्रजातिकामसत्र मुत्तरं तत्र संव-
त्सराभिप्रयोगो भवति संवत्सरए हि प्रजाः पशवो
ऽनु प्रजायन्त इति हि भवतीति तचैतान्येव त्रीणि
समस्य निदधात्येव मा तृतीयं पृष्ठाभिप्लवयोर्दश-
रात्रस्येति विकार उपपत्स्यत इति तचैके गवामयन
मन्ततः कुर्वन्ति प्रजातिकामसत्त्वादेतेन वै गावः
प्रजातिं भूमान मगच्छन् प्र जायन्ते बहवो भव-
न्तीति स्तोमतश्चैव गवामयनानाए रोहो भविष्य-
तीति यथैतत्प्रजापतेः सहस्रसंवत्सरं परमां विराज
मुपक्रान्त मपि वा प्रजापतीयमा मेवोपक्रान्तए स्यात्तत्र
खलु त्रिवृतं करोति यथान्तरत्व लघुस्यात्स्तोमस्यायं
प्रजापतिरिति ज्योतिष्टोमं तन्त्र माग्निष्टोमीए सए-
स्थाए रथन्तरं पृष्ठं तत्र खलु बृहस्पतिसवं करोत्येषो
ऽग्निष्टोमस्त्रिवृत्स्तोमो रथन्तरपृष्ठो ज्योतिष्टोमतन्त्रो
भवतीति न्यायकृप्तमुत्तरं न्यायकृप्तमुत्तरम् ॥ १२ ॥

इति निदानसूत्रे दशमः प्रपाठकः॥ समाप्तोऽयं ग्रन्थः॥